॥ श्रीः ॥

# हरिदास संस्कृत ग्रन्थमाला

## ११८

॥ श्रीः ॥

# दुर्गापञ्चाङ्गम्

सम्पादकः—

दैवज्ञभूषण श्रीमातृप्रसादपाण्डेयः



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

१९७७

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

मुद्रक : चौखम्बा प्रेस, वाराणसी
संस्करण : तृतीय, वि॰ सं॰ २०३४
मूल्य : १२-००


K. 37/99, Gopal Mandir Lane
Post Box 8, Varanasi-221001 ( India )
Phone : 63145

अपरं च प्राप्तिस्थानम्
चौखम्बा अमरभारती प्रकाशन
के० ३७/११८, गोपाल मन्दिर लेन
पो० बा० नं० १३८, वाराणसी-२२१००१ ( भारत )

## विषय-सूची

## भूमिका

या चण्डी मधुकैटभप्रमथिनी या माहिषोन्मूलिनी,
या धूम्रेक्षणचण्डमुण्डमथिनी या रक्तबीजाशिनी।
शक्तिः शुम्भनिशुम्भदैत्यदलनी या सिद्धिलक्ष्मीः परा,
सा दुर्गा नवकोटिमूर्तिसहिता मां पातु विश्वेश्वरी॥

जगत्प्रसविनी अम्बिका के अनन्त रूप हैं जिनमें से जगत् में जगह-जगह कुछ रूपों का दिग्दर्शन हो रहा है।

काशीजी में अपने नवरूप का दर्शन कराने के लिये शैलपुत्री,[१] ब्रह्मचारिणी,[२] चन्द्रघण्टा,[३] कूष्माण्डा,[४] स्कन्दमाता,[५] कात्यायनी,[६] कालरात्रि,[७] महागौरी[८] और सिद्धिदात्री,[९] इन रूपों में वर्तमान हैं। जननी के नव अक्षर वाले बीज मन्त्र के अनुसार इनका नव कोटि स्वरूप और नव कोटि स्तुति मानी गई है। वनदुर्गा, सप्तशतीदुर्गा, सत्यदुर्गा, शूलिनीदुर्गा आदि अनेक दुर्गापाठ तो हमारे पुस्तक-सदन में वर्तमाम हैं।

परन्तु कलियुग के इस लघुतम जीवन में सभी का पाठ करना सम्भव नहीं, अत एव मैंने सम्पूर्ण भक्त जनों के हितार्थ इस दुर्गा पञ्चाङ्ग में जिसे देवी का ही पञ्च अङ्ग मानिये एकादश अनुपम रत्नों का समावेश कर दिया है। इस पुस्तक को काशी के सुप्रसिद्ध चौखम्बा संस्कृत पुस्तकालय को सर्वाधिकार सहित प्रकाशित करने के लिए अर्पण कर जनता का मनोनीत कल्याण होगा ऐसा पूर्ण विश्वास करता हूँ।

नेत्रेषु संख्यं कुसुमं रुद्रपुष्पसमन्वितम्।
प्रेम्णा समर्प्यते पाणौ पितुः कैलासवासिनः॥

विनीत—
—मातृप्रसाद पाण्डेय

१. मढ़िया घाट, २. दुर्गाघाट, ३. लक्खी चौतरा, ४. दुर्गाजी प्रसिद्ध, ५. वागीश्वरी, ६. आत्मविश्वेश्वर के सन्निकट, ७. कालिकागली, ८. अन्नपूर्णाजी, किसी आचार्य के मत से संकटाजी, ९. सिद्धमाता की गली। यह नव दुर्गा का स्थान है।

॥ श्रीः ॥

# दुर्गापञ्चाङ्गम्

## अथ दुर्गापटलम्

श्रीदेव्युवाच—

भगवन्सर्वतन्त्रज्ञ ! साधकानां जयावह।
यत्पुरा सूचितन्देव ! दुर्गापञ्चाङ्गमुत्तमम् ॥ १ ॥
सर्वस्वं सर्वदेवानां रहस्यं सर्वमन्त्रिणाम्।
तदद्य कृपया ब्रूहि यद्यस्ति मयि ते दया ॥ २ ॥

श्रीभैरव उवाच—

एतद् गुह्यतमन्देवि पञ्चाङ्गं तत्त्वलक्षणम्।
दुर्गायाः सारसर्वस्वं न कस्य कथितं मया ॥ ३ ॥
तव स्नेहात्प्रवक्ष्यामि दुर्गा-पञ्चाङ्गमीश्वरि !।
गुह्यं गोप्यतमं गुह्यं न देयं ब्रह्मवादिभिः ॥ ४ ॥
या देवी दैत्यदमनी दुर्गेत्यष्टाक्षरा शिवा।
देवैराराधिता पूर्वं ब्रह्माच्युतपुरःसरैः ॥ ५ ॥
पुरन्दरहितार्थाय वधार्थाय सुरद्विषाम्।
सैवं सृजति भूतानि राजसी परमेश्वरी ॥ ६ ॥

सात्त्विकी रक्षति प्रान्ते संहरिष्यति तापसी ।
इत्थं गुणत्रयीरूपा सृष्टिस्थितिलयात्मिका ॥ ७ ॥
अष्टाक्षरी महाविद्या सन्ध्यातीता परात्मिका ।
तस्याः पञ्चाङ्गमधुना रहस्यन्त्रिदिवौकसाम् ॥ ८ ॥
वक्ष्यामि परमप्रीत्या न चाख्येयं दुरात्मने ।
पटलं तव वक्ष्यामि यन्त्रोद्धारं पराश्रयम् ॥ ९ ॥
सर्वतन्त्रेषु विख्यातं सर्वकामफलप्रदम् ॥ १० ॥

तारं मायां चाक्रिकश्चक्रिदूर्वा, वायव्यालं विश्वमन्ते भवानि ।
दुर्गायास्ते वर्णितो मूलविद्या, मन्त्रोद्धारो गोपितोऽष्टाक्षरोयम् ॥ ११ ॥

इत्युद्धारः ।

नास्यान्तरायबाहुल्यं नापि मित्रारिदूषणम् ।
नो वा प्रयाससंयोगो नाचारयुगविप्लवः ॥ १२ ॥
साक्षात्सिद्धिप्रदो मन्त्रो दुर्गायाः कलिनाशनः ।
अष्टाक्षरोऽर्थसिद्धीशो गोपनीयो दिगम्बरैः ॥ १३ ॥
महाचीनक्रमस्थानां साधकानां जयावहः ।
मन्त्रराजो महादेवि ! सद्यो भोगापवर्गकः ॥ १४ ॥
वर्णलक्षं पुरश्चर्या तदर्धं वा महेश्वरि ।
एकलक्षावधि कुर्यान्नातो न्यूनं कदाचन ॥ १५ ॥
मूलोत्कीलनसिद्धन्तु सञ्जीवनसुसंस्कृतम् ।
पुरश्चर्याश्चरेत्पश्चात्सम्पुटाख्यश्चरेन्मनुम् ॥ १६ ॥
ततो मन्त्रं जपेन्नित्यं दुर्गाया अष्टसिद्धिदम् ।



यज्जप्त्वा साधको भूमौ विचरेद् भैरवो यथा ॥ १७ ॥
ऋषिरस्य स्मृतो देवि मन्त्रस्याद्यो महेश्वरः ।
छन्दोऽनुष्टुब् देवता च श्रीदुर्गाष्टाक्षरा स्मृता ॥ १८ ॥
तारं कालकमीशानं विश्वं बन्धनमीश्वरि ! ।
धर्मार्थकाममोक्षार्थे विनियोगः प्रकीर्तितः ॥ १९ ॥
तारं मायाक्षरैर्देवि ! न्यासं षड्दीर्घभागिभिः ।
निहत्य षड्रिपून् देवीं ध्यायेद् दुर्गां कुलेश्वरि ! ॥ २० ॥
दूर्वानिभान्त्रिनयनां विलसत्किरीटां
शङ्खाब्जखड्गशरखेटकशूलचापाम्
सन्तर्जनीश्च दधतीं महिषासनस्थां
दुर्गां नवारकुलपीठगतां भजेऽहम् ॥ २१ ॥
यन्त्रोद्धारं प्रवक्ष्यामि दुर्गायाः कुलसुन्दरि ! ।
सर्वसिद्धिप्रदं चक्रं सर्वाशापरिपूरकम् ॥ २२ ॥
बिन्दुत्रिकोणं रसकोणबिम्बं वृत्ताष्टपत्रांचितवह्निवृत्तम् ।
धरागृहोद्भासितमिन्दुचूले दुर्गाश्रयं यन्त्रमिदं प्रदिष्टम् ॥ २३ ॥
लयांगमस्य यन्त्रस्य सर्वतन्त्रेषु गोपितम् ।
येनोच्चारणमात्रेण कोटियज्ञफलं लभेत् ॥ २४ ॥
गणेशश्च कुमारश्च पुष्पदन्तं विकर्तनम् ।
चतुर्द्वारेषु देवेशि ! पूजयेत् साधकेश्वरः ॥ २५ ॥
ब्राह्मी नारायणी देवी चामुण्डाप्यपराजिता ।
माहेश्वरी च कौमारी वाराही नारसिंहिका ॥ २६ ॥
पूज्या वसुदले देवि ! भैरवानष्ट पार्वति ! ।
असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तकपालकाः ॥ २७ ॥

भीषणश्चैव संहारो वामावर्तेन साधकैः ।
पूज्या पृथक् पृथग् देवि ! गन्धपुष्पाक्षतैः शिवे ! ॥ २८ ॥
दत्त्वा पुष्पाञ्जलिश्चक्रे मूलमुच्चार्य साधकः ।
पूजयेत् पञ्चकिञ्जल्कैः षडस्रेषु कुलाम्बिकाः ॥ २९ ॥
शैलपुत्रीं स्ववामाग्रात् पूजयेद् ब्रह्मचारिणीम् ।
चन्द्रघण्टाश्च कूष्माण्डां स्कन्दमातरमीश्वरि ! ॥ ३० ॥
कात्यायनीश्च सम्पूज्य दूर्वागन्धाक्षतैः परम् ।
पुनः पुष्पाञ्जलिन्दत्वा श्रीचक्र परमार्थदे ॥ ३१ ॥
पूजयेद् देवतास्तिस्रः कूलस्थास्त्रिपुराम्बिकाः ।
कालरात्री महागौरी देवदूतीति पार्वति ! ॥ ३२ ॥
त्रिकोणाग्राच्छिवे ! पूज्याः सिन्दूराक्षतपुष्पकैः ।
दूर्वादलांजलिन्दत्त्वा यन्त्रराजेष्टसिद्धये ॥ ३३ ॥
पूजयेदम्बिकां दुर्गामष्टाक्षरविभूषणाम् ।
विन्दौ देवीमष्टभुजां विद्यामष्टाक्षरीं शिवे ! ॥ ३४ ॥
नीलकण्ठं शिवे ! विन्दौ पूजयेज्जगदम्बिकाम् ।
तत्रायुधानि देवेशि ! पूजयेदष्ट साधकः ॥ ३५ ॥
शङ्खं पद्ममसिं बाणान्धनुःखेटकमीश्वरि ! ।
शूलं सन्तर्जनीं दिव्यां नानापुष्पैः समर्चयेत् ॥ ३६ ॥
देवदेव्यौ बिन्दुपाठे पूजयेत् सर्वसिद्धये ।
यं विधाय कलौ मन्त्री भवेत्कल्पद्रुमोपमः ॥ ३७ ॥
स्तम्भनं मोहनं चैव मारणाकर्षणे ततः ।
वशीकारं तथोच्चाटं शान्तिकं पौष्टिकं तथा ॥ ३८ ॥
एषां साधनमाचक्षे प्रयोगानां महेश्वरि ।
महाचीनक्रमस्थानां साधकानां हिताय च ॥ ३९ ॥
अयुतं तु जपेन्मूलं श्मशाने निशि साधकः ।
हुनेद्दशांशतः सर्पिर्यवान्मांसान्मृगच्युतान् ॥ ४० ॥
स्तम्भनं जायते क्षिप्रं वादिकामिजनांभसाम् ।
अयुतं प्रजपेद् देवि ! वटे रुद्राक्षमालया ॥ ४१ ॥
होमो दशांशतः कार्यो घृतपद्माक्षपङ्कजैः ।
आरग्वधैः स्वधामलैर्मोहनं जायते क्षणात् ॥ ४२ ॥
देवानां दानवानां च का कथाऽल्पधियां नृणाम् ।
अयुतं प्रजपेन्मूलं वने साधकसत्तमः ॥ ४३ ॥
वेतसीमूलगो वापि हुनेत्तत्र दशांशतः ।
घृतपायसशम्बूकान् रिपुर्मृत्युमुखं व्रजेत् ॥ ४४ ॥
अयुतं प्रजपेद् रात्रौ शून्यागारे कुलेश्वरि ! ।
होमो दशांशतः कार्यो घृतव्यापशधारकैः ॥ ४५ ॥
कपिबीजैरपि प्रातर्भवेदाकर्षणं स्त्रियाम् ।
अयुतं प्रजपेन्मूलं चत्वरे त्वरितं हुनेत् ॥ ४६ ॥
आज्याब्जक्षुरपाषाणडरक्तपुष्पाणि पार्वति ! ।
शक्रोऽपि वशतामेति किं पुनः क्षुद्रभूमिपः ॥ ४७ ॥
अयुतं प्रजपेन्मूलं साधकोऽश्वत्थमूलके ।
हुनेदाज्यं दशांशेन केशां स्त्रीणां त्वचङ्कणा ॥ ४८ ॥
रिपुमुच्चाटयेच्छीघ्रं यदि शक्रसमो भवेत् ।

अयुतं प्रजपेन्मूलं सुरद्रुमतले हुनेत् ॥ ४९ ॥
घृताराडकुक्कुटाङ्गानि नानापुष्पाणि पृच्छकः ।
रोगोपद्रवकालस्य सद्यः शान्तिर्भविष्यति ॥ ५० ॥
अयुतं प्रजपेन्मूलं लीलोपवनमराडले ।
होमो दशांशतः कार्यो घृतमीनाजमस्तकैः ॥ ५१ ॥
पादैरष्टभिरीशानि ! सद्यः पुष्टिः प्रजायते ।
इत्येष पटलो दिव्यो मन्त्रसर्वस्वरूपवान् ॥ ५२ ॥
दुर्गारहस्यभूतोऽपि गोपनीयो मुमुक्षुभिः ॥ ५३ ॥

इति रुद्रयामले तन्त्रे श्रीदेवीरहस्ये दुर्गापटलः समाप्तः ।

## अथ दुर्गापद्धतिः

श्रीभैरव उवाच—

ॐ शृणु पार्वति ! वक्ष्यामि पद्धतिं गद्यरूपिणीम् ।
यस्याः श्रवणमात्रेण कोटियज्ञफलं लभेत् ॥

ॐ ब्राह्मे मुहूर्त्ते उत्थाय बद्धपद्मासनः स्वशिरस्थसहस्राधोमुखकमलकर्णिकान्तगं निजगुरुं श्वेतवर्णं श्वेतालंकारालंकृतं द्विभुजं स्वशक्त्या श्वेताम्बरभूषितया वामेऽङ्के सहितं ध्यात्वा मानसैरुपचारैः सम्पूज्य दण्डवत् प्रणमेत् ।

अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥

इति ध्यात्वा तदाज्ञां गृहीत्वा बहिरागत्य मलमूत्रादि सन्त्यज्य



वर्णोक्तं शौचमादाय नद्यादौ गत्वा स्वकूर्चं द्वादशाङ्गुलम् ॐ क्लीं कामदेवाय सर्वजनमोहराय नमः ॥ इति दन्तान् विशोध्य चाक्रिकबीजेन गण्डूषषट्कं विधाय प्रणवेन मुखं त्रिः प्रोक्ष्य । ॐ ह्रीं मणिधरि वज्रिणि शिखापरितरे रक्ष २ हूँ फट् स्वाहेति शिखां बद्ध्वा तत्त्वत्रयेणाचम्य मूलेन प्राणायामं विधाय मलापकर्षणां स्नानं कुर्यात् । ततो मूलेन मृदमानीय जलं प्रोक्षयेत् । मन्त्रमृदा सूर्यमराडलं विचिन्त्य ।

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु ॥

इति तीर्थान्यावाह्य ॥ जले यन्त्रं विभाव्य सनीलकराठां दुर्गामावाहयेत् । तत्र षडङ्गं विधाय देवीं सशिवां ध्यात्वा मूलं यथाशक्ति जप्त्वा उन्मज्जेत् ॥ तत्र कुम्भमुद्रां बद्ध्वा स्वमूर्ध्नि देवदेव्यौ जलेन स्नापयित्वा ॥

ॐ ह्रां ह्रीं सः मार्तराडभैरवाय प्रकाशशक्तिसहिताय एष तेऽर्घो नम इति सूर्यायार्घत्रयं दत्त्वा वासः परिधाय तत्त्वत्रयेणाचम्य त्रिः प्राणायामं विधाय पूर्वसन्ध्यां कृत्वा षडङ्गं कृत्वा चुलुकेन जलमादाय तत्त्वमुद्रयाच्छाद्य । हं यं वं रं लं इति त्रिरभिमन्त्र्य मूलमुच्चरंस्तद्गलितोदकबिन्दुभिः सप्तधा स्वशिरस्यभ्युक्ष्य । सव्यहस्ते शेषमुदकं धृत्वा इडयान्तर्नीत्वा देहान्तःपापं प्रक्षाल्य पिङ्गलया विरेच्य । पुरः कल्पितवज्रशिलायां वामे फडिति निक्षिपेत् । इत्यघर्षणं विधाय पूर्ववदाचम्य जले यन्त्रं ध्यात्वा मूलं यथाशक्ति जप्त्वा । मूलविद्यान्ते सायुधे सवाहने

सपरिच्छदे श्रीनीलकण्ठसहिते मातर्दुर्गे तृप्यताम् इत्यष्टवारं सन्तर्प्य । नीलकण्ठं त्रिः सन्तर्प्य ।

एकैकाञ्जलिना परिवारदेवताः सन्तर्प्य ॥ देवदेव्यौ हृदि ध्यात्वा जले चतुरस्रं विधाय । तत्रेशानादिक्रमेण गुरुपंक्तिं सन्तर्प्य देवीं गायत्रीं जपेत् ॥ ॐ ह्रीं दुन्दुर्गायै विद्महे अष्टाक्षरायै धीमहि तन्नो चण्डि प्रचोदयात् । इति यथाशक्ति प्रजप्य गायत्र्यानया देवदेव्योरर्घत्रयं दत्त्वा । जपं समर्प्य यागमण्डपमागच्छेत् । इति विधिः ।

ततो गृहमागत्य पादौ प्रक्षाल्य द्वारदेवीः पूजयेत् । ॐ गाँ गुँ गणेशाय नमः पूर्वे । ॐ क्षां क्षीं ह्रीं वटुकाय नमः दक्षिणे । ॐ क्षां क्षें क्षेत्रपालाय नमः पश्चिमे । ॐ यां यूं योगिनीभ्यो नमः उत्तरे । गं गङ्गायै नमो देहल्याम् । यं यमुनायै नमः अधः ॥ सं सरस्वत्यै नमः मध्ये इति सम्पूज्य । गृहान्तः प्रविश्य । यथोपचितमासनं शोधयेत् । ॐ आं आसनमंत्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्मो देवता आसनशोधने विनियोगः । ॐ पृं पृथिव्यै नमः ।

महि ! त्वया धृता लोका देवि ! त्वं विष्णुना धृता ।
त्वं च धारय मां देवि, पवित्रं कुरु चासनम् ॥

ॐ आं शक्तये नमः मूलप्रकृत्यै नमः । अं अनन्ताय नमः । पद्माय नमः । पद्मनालाय नमः । तत्रोपविश्य तालत्रयं कुर्यात् ।

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥



इति तालत्रयं दत्त्वा वामपार्ष्णिघातत्रयेण विघ्नानुत्सार्य नाराचमुद्रां प्रदर्श्य गुरुं प्रणमेत् ।

अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥

ॐ स्वगुरुभ्यो नमः । परमगुरुभ्यो नमः । परापरगुरुभ्यो नमः । परमेष्ठिगुरुभ्यो नमः । इति गन्धाक्षतैरभ्यर्च्य न्यासपूर्वं सङ्कल्पं कुर्यात् ।

अस्य श्रीदुर्गामन्त्रस्य महेश्वरऋषिः अनुष्टुप्छन्दः श्रीदुर्गा देवता दुं बीजं ह्रीं शक्तिः ॐ कीलकं नम इति दिग्बन्धः धर्मार्थकाममोक्षार्थे दुर्गापूजायां विनियोगः ।

अथ न्यासः

महेश्वरऋषये नमः शिरसि । अनुष्टुप्छन्दसे नमो मुखे । दुर्गादेवतायै नमो हृदि । दुं बीजाय नमो नाभौ । ह्रीं शक्तये नमो गुह्ये । ॐ कालकाय नमः पादयोः । नमो दिग्बन्ध इति सर्वाङ्गे ।

ॐ ह्रां अंगुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनीभ्यां नमः । ॐ ह्रूं मध्यमाभ्यां नमः । ॐ ह्रैं अनामिकाभ्यां नमः । ॐ ह्रौं कनिष्ठिकाभ्यां नमः । ॐ ह्रः करतलकरपृष्ठाभ्यां नमः । ॐ ह्रां हृदयाय नमः । ॐ ह्रीं शिरसे स्वाहा । ॐ ह्रूं शिखायै वषट् । ॐ ह्रैं कवचाय हुं । ॐ ह्रौं नेत्रत्रयाय वौषट् । ॐ ह्रः अस्त्राय फट् ।

अथ मूलन्यासः

ॐ नमः शिरसि । ॐ ह्रीं नमो मुखे । ॐ दुं नमो वक्षसि । ॐ गां नमो नाभौ । ॐ यैं नमः पृष्ठे । ॐ नं नमो जान्वोः । ॐ मः

नमः पादयोः । इति त्रिर्व्यापयेत् । ॐ आत्मतत्त्वाय नमः शिरसि । ह्रौं विद्यातत्त्वाय नमो मुखे । ह्रुं शिवतत्त्वाय नमो हृदये । ॐ गुरुतत्त्वाय नमो नाभौ । ॐ ह्रीं शक्तितत्त्वाय नमो जङ्घयोः । ॐ दुं शक्तितत्त्वाय नमः पादयोः । ॐ आं अं कं खं गं घं ङं इं ईं हृदयाय नमः । ॐ ह्रीं उँ ऊँ चं छं जं झं ञं शिरसे स्वाहा । ॐ ऌं टं ठं डं ढं णं ॡं शिखायै वषट् । एं तं थं दं धं नं ऐं कवचाय हुँ । ॐ पं फं बं भं मं औं नेत्रेभ्यो वौषट् । अं यं रं लं वं शं षं सं हं ळं क्षं अस्त्राय फट् ।

ॐ आं अं कं खं गं घ ङं इं ईं अंगुष्ठाभ्यां नमः । ॐ उँ चां छं जं झं ञं ऊँ तर्जनीभ्यां नमः । ॐ ऌं टं ठं डं ढं णं ॡं मध्यमाभ्यां नमः । ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः । ॐ पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः । ॐ अं यं रं लं वं शं षं सं हं ळं क्षं करतलकरपृष्ठाव्यां नमः ।

इति शुद्धमातृकान्यासः ।

—: ❀ :—

## अथ मूलमातृकान्यासः

ॐ नमः शिरसि । आं नमो मुखवृत्ते । इं नमो दक्षनेत्रे । ईं नमो वामनेत्रे । उं नमो दक्षकर्णे । ऊँ नमो वामकर्णे । ऋं नमो दक्षगण्डे । ॠं नमो वामगण्डे । ऌं नमो दक्षनासापुटे । ॡं नमो वामनासापुटे । एं नमः ऊर्ध्वोष्ठे । ऐं नमः अधरोष्ठे । ओं नमः ऊर्ध्वदन्तपङ्क्तौ । औं नमः अधोदन्तपङ्क्तौ । अं नमः शिरसि । अः नमो मुखे । कं नमो दक्षबाहुमूले । खं नमो दक्षकूर्परे । गं



नमो दक्षमणिबन्धे । घं नमो दक्षिणाङ्गुलिमूले । ङं नमो दक्षाङ्गुल्यग्रे । चं नमो वामबाहुमूले । छं नमो वामकूर्परे । जं नमो वाममणिबन्धे । झं नमो वामाङ्गुलिमूले । ञं नमो वामाङ्गुल्यग्रे । टं नमो दक्षपादमूले । ठं नमो दक्षजानुनि । डं नमो दक्षगुल्फे । ढं नमो दक्षपादाङ्गुलिमूले । णं नमो दक्षाङ्गुल्यग्रे । तं नमो वामपादमूले । थं नमो वामजानुनि । दं नमो वामगुल्फे । धं नमो वामाङ्गुलिमूले । नं नमो वामाङ्गुल्यग्रे । पं नमो दक्षपार्श्वे । फं नमो वामपार्श्वे । बं नमः पृष्ठे । भं नमो नाभौ । मं नमो जठरे । यं नमो हृदि । रं नमो दक्षांसे । लं नमः कुकुदि । वं नमो वामांसे । शं नमो हृदयादि दक्षहस्ताग्रान्तम् । षं नमो हृदयादि वामहस्ताग्रान्तम् । सं नमो हृदयादि दक्षपादाग्रान्तम् । हं नमो हृदयादि वामपादाग्रान्तम् । ळं नमः पादादिशिरः पर्यन्तम् । क्षं नमः शिरसः पादपर्यन्तम् । इति त्रिर्व्यापयेत् । एवं न्यासं विधाय पूर्ववत् षडङ्गं कृत्वा प्रणवेन प्राणायामत्रयं विधाय । पूरकाः १२ कुम्भकाऽ १६ रेचकाः ३२ । ॐ ह्रीं आत्मतत्त्वं शोधयामि स्वाहा । ॐ ह्रीं विद्यातत्त्वं शोधयामि स्वाहा । ॐ ह्रीं शिवतत्त्वं शोधयामि स्वाहा । इत्याचम्य । प्राणायमयोगेन भूतशुद्धिं कुर्यात् ।

ॐ ह्रूं आकुञ्चेन सुषुम्णावर्त्मना प्रदीपकलिकाकारं तेजो-ब्रह्मपथांतर्नीवा परमशिवे समानोय तत्र स्वधावृष्ट्या कुलगुरुं सतर्प्य पुनस्तेनैव मार्गेण षट्चक्रकुलं भित्वा तत्तेजः स्वस्थानीय-मानीय यमिति वायुबीजेन षोडशधाजप्तेन वामकुक्षिगतं पापपुरुषं

कृष्णावर्णं रक्तश्मश्रुलं अङ्गुष्ठमात्राकारं ध्यात्वा शोषयेत्। रमिति वह्निबीजेन षोडशवारं जप्तेन दाहयेत्। लमिति इन्द्र-बीजेन षोडशधाजप्तेन गलच्चन्द्रामृतवृष्ट्या प्लावयेत्। वमिति अमृतबीजेन षोडशधाजप्तेन स्वात्मानं दिव्यदेहं भावयेदिति। भूतशुद्धिं कृत्वा प्राणप्रतिष्ठां कुर्यात्।

ॐ ह्रीं दुं आं क्रो सोहं हंसः मम प्राणा मम जीव इह स्थितः मम सर्वेन्द्रियाणि मम वाङ्मनस्त्वक्चक्षुःश्रोत्रघ्राणप्राणा इहैवागत्य सुखं चिरन्तिष्ठन्तु स्वाहा। इति प्राणप्रतिष्ठाक्रमः। इति प्राणान् संस्थाप्य पूर्ववत् षडङ्गं विधायाचम्य मूलदेवीं ध्यायेत्।

भूगेहनागदलवृत्तरसारसार,
बिन्दुस्थसन्महिषपीठगतां भवानीम्।
दूर्वादलाग्रसदृशच्छविमिष्टबाहुं
दुर्गां भजे त्रिनयनां विलसन्त्रिबीजाम्।

इति ध्यात्वा मूलाङ्गन्यासं विधाय, श्रीचक्रं चतुर्द्वारं त्रिवृत्तमष्टदलं वृत्तं षडस्त्रं त्रिकोणं बिन्दुं विचिन्त्य वाष्टगन्धेन विलिख्य वा विभाव्य पीठपूजां कुर्यात्। ॐ मण्डूकाय नमः। कालाग्निरुद्राय नमः। मूलं प्रकृत्यै नमः। आधारशक्त्यै नमः। कूर्माय नमः। अनन्ताय नमः। वाराहाय नमः। पृथिव्यै नमः। इत्युपर्युपरि सम्पूज्य।

स्वधार्णवाय नमो मध्ये। हवरत्नविराजितनवरत्नखण्डमयदीपाय नमः। पद्मरागखण्डाय नमः। स्वर्णगिरये नमः। नन्दनोद्यानाय नमः। कल्पवनाय नमः। पद्मवनाय नमः। विचित्ररत्न-



खचितभूमिकायै नमः। चिन्तामणिमण्डपाय नमः। नवरत्नखचितरत्नमयवेदिकायै नमः। रत्नसिंहासनाय नमः। तन्मध्ये सहस्रारपद्माय नमः। प्रकृतिमयपत्रेभ्यो नमः। विकृतिमयकेशरेभ्यो नमः। तन्मध्ये—अष्टबीजभूषितकर्णिकायै नमः। तत्पार्श्वे—धर्माय नमः। ज्ञानवैराग्यैश्वर्येभ्यो नमः। वामतः—अधर्माज्ञानावैराग्यानैश्वर्येभ्यो नमः। इति सम्पूज्य, मध्ये—संसत्त्वाय नमः। रं रजसे नमः। तं तमसे नमः। मूलं। मातृकस्त्वोच्चार्य्य श्रीयोगपीठाय नमः। इत्यभ्यर्च्य। पात्रार्चनं कुर्यात्। तत्र स्ववामे वृत्तं त्रिकोणं चतुरस्रं मण्डलं विधाय मूलेनाभ्यर्च्य मूलं दुर्गासामान्यार्घाय नमः। तन्मण्डलं षडङ्गेनाभ्यर्च्य तत्रास्त्रक्षालितं शङ्खं संस्थाप्य।

शङ्खे—अं अर्कमण्डलाय द्वादशकलात्मने नमः। विलोममातृकायाः सम्पूज्य। सौः सोममण्डलाय षोडशकलात्मने नमः। इत्यभ्यर्च्य मूलेनाष्टधाभिमन्त्रितं कृत्वा गङ्गे च यमुने चैवेति तीर्थमावाह्य शुद्धिं भावयेदिति सामान्यार्चनविधिः।

सामान्यार्घस्य वामे त्रिकोणषटकोणवृत्तचतुरस्रं मण्डलं कृत्वा तन्मण्डलं षडङ्गेनाभ्यर्च्य मूलमुच्चार्य। श्रीदुर्गाकलशमण्डलाय नमः। ततः पूर्ववन्मूलेनाभ्यर्च्य तत्रास्त्रक्षालितां त्रिपादिकां संस्थाप्य। रं वह्निमण्डलाय दशकलात्मने नम इत्यभ्यर्च्य। तत्रास्त्राक्षालितं कलशं संस्थाप्य। अं अर्कमण्डलाय द्वादशकलात्मने नम इत्यभ्यर्च्य तत्रानामिकाङ्गुष्ठकरामृतधारापातेन कलशमापूर्य सौः सोममण्डलाय षोडशकलात्मने नमः। इत्यभ्यर्च्य। ॐ ह्रीं दां

द्रूं द्रीं द्रूं द्रैं द्रौं द्रः दुं अं अमृते अमृतोद्भवे अमृतवर्षिणि अमृत स्रावय स्रावय शुक्रशापं मोचय मोचय। ह्रीं दुं सुरादेव्यै वौषट् इति सप्तधाभिमन्त्र्य ॐ दुं ह्रों ॐ सहक्षमलवर यूं आनन्दभैरवाय वौषट् ॐ ह्रीं दुं आनन्दभैरवाय सुधादेवीपादुकाभ्यो नमः। इति सम्पूज्य धेनुयोनिमुद्रां प्रदर्श्य।

सूर्यमण्डलसम्भूते वरुणालयसम्भवे।
अमावाजमये देवि शुक्रशापाद् विमुच्यताम्॥
एकमेव परं ब्रह्म स्थूलं सूक्ष्ममयं परम्।
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम्॥
पापमानः परावन्दः पवमानः परोरसः।
पवमानं परं ज्ञानं तेन त्वां पावयाम्यहम्॥
वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि।
तेन सत्येन ते देवि! ब्रह्महत्या व्यपोहतु॥
कृष्णशापविनिर्मुक्ता त्वं मुक्ता ब्रह्मशापतः।
विमुक्ता रुद्रशापेन पवित्रा भव सर्वदा।

इति कलशं सम्पूज्य। धेनुयोनिमत्स्यमुद्राः प्रदर्श्य गरुड-मुद्रयाच्छादयेदिति द्रव्यशुद्धिः।

ॐ ह्रीं दुं कृतावतारो हरिणा कलिना पीडितं जगत्।
बलिना निगृहीतं तु कौलिकानां हिताय च॥
श्रीदुर्गापरितोषार्थं स्वयं मीनोऽभवत् प्रभुः।
इति मुद्रात्रयं प्रदर्श्य शुद्धिं विशोधयेत्॥
ॐ ह्रीं दुं छागलादिगवांतादिकृतरूपाय वै नमः।
बल्यर्थं देवदेव्योश्च पवित्रीभव साम्प्रतम्।
मूलं त्रिधा जप्त्वा मुद्रात्रयं प्रदर्शयेदिति।
ॐ ह्रीं दुं दुर्गार्चनिकाले तु यानि यानीह साम्प्रतम्॥
वस्तूनि सौरभेयानि पवित्राणीह सिद्धये।

इति मूलं त्रिधा जपेदिति मुद्रात्रये सर्वस्योपरि दर्शयेदिति विधिः।

तत्र मूलेनानन्दभैरवाङ्कोपविष्टां नीलकण्ठेशीं श्रीदेवीं ध्यात्वा मूलेनावाह्य श्रीचक्रमर्चयेत्। तत्रमूलेन पाद्याचमनीया-र्घादि परिकल्पयेत्।

मूलेन देवदेभ्योर्मधुपर्काचमनीयादि निवेदयेत्।
मूलेन नैवेद्यं निवेद्याचमनीयं नम इति निवेद्य।
गण्डूषत्रयं निवेद्य मूलेन ताम्बूलादि समर्पयेत्॥
ततो मूलषडङ्गं विधाय चतुरस्रं पूजयेत्।
ओं ह्रीं दुं सर्वसिद्धिप्रदाय चक्राय नमः॥

इति पुष्पाञ्जलिं दत्त्वा—

ॐ ह्रीं दुं गं गणेशाय नमः पूर्वे। ॐ ह्रौं कुमाराय नमः दक्षिणे। श्रीपुष्पदन्ताय नमः पश्चिमे। वं विकर्तनाय नमः उत्तरे। इत्यभ्यर्च्य प्रथमावरणम्।

ॐ ह्रीं दुं असिताङ्गभैरवयुतब्राह्मीश्रीपादं पूजयामि तर्प-यामि नमः॥१॥ ॐ ह्रीं दुं रुरुभैरवयुतनारायणीश्रीपादं पूज-

यामि तर्पयामि नमः ॥३॥ ॐ ह्रीं दुं चण्डभैरवयुत चामुण्डाश्रीपादं पूजयामि तर्पयामि नमः ॥३॥ ॐ ह्रीं दुं क्रोधेशभैरवयुत अपराजिताश्रीपादं पूजयामि तर्पयामि नमः ॥३॥ ॐ ह्रीं दुं उन्मत्तभैरवयुतमाहेश्वरीश्रीपादं पूजयामि तर्पयामि नमः ॥३॥ ॐ ह्रीं दुं कपालभैरवयुतकौमारीश्रीपादं पूजयामि तर्पयामि नमः ॥३॥ ॐ ह्रीं दुं भीषणभैरवयुतवाराहीश्रीपादं पूजयामि तर्पयामि नमः ॥३॥ ॐ ह्रीं दुं संहारभैरवयुतनारसिंहीश्रीपादं पूजयामि तर्पयामि नमः ॥३॥

इति वामावर्तेन गन्धाक्षतैः पुष्पैरभ्यर्च्य द्वितीयावरणम्।

ॐ ह्रीं दुं सर्वाशापूरकाय चक्राय नम-।

इति पुष्पाञ्जलिं दत्त्वा, षट्कोणं पूजयेत्—

ॐ ह्रीं दुं शैलपुत्रीश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥
ॐ ह्रीं दुं ब्रह्मचारिणीश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥
ॐ ह्रीं दुं चन्द्रघण्टाश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥
ॐ ह्रीं दुं कूष्माण्डाश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥
ॐ ह्रीं दुं स्कन्दमाताश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥
ॐ ह्रीं दुं कात्यायनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥
इति वामावर्तेन सम्पूज्य पुष्पाञ्जलिं दद्यात्, तृतीयावरणम्।

ॐ ह्रीं दुं सर्वाशापूरकाय चक्राय नमः। इति पुष्पाञ्जलिं दत्त्वा ॐ ह्रीं दुं कालरात्रीश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥ ॐ ह्रीं दुं महागौरीश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥ ॐ ह्रीं दुं देवदूती श्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥ इत्यग्रे ईशानाग्नेयतोऽर्चयेत्। इति चतुर्थावरणम्।

ॐ ह्रीं दुं अष्टसिद्धिदायकचक्राय नमः।

इति पुष्पाञ्जलिं दत्त्वा, मूलमुच्चार्य

ॐ ह्रीं दुं श्रीनीलकण्ठश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥

ॐ ह्रीं दुं दुर्गाश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥

इति सप्तवारमभ्यर्च्य बिन्दौ पञ्चमावरणम्।

बिन्दूपरि मूलं ॐ ह्रीं दुं अम्बिकाश्रीपादुकां तर्पयामि नमः ॥३॥
मूलं ॐ ह्रीं दुं अष्टाक्षरीश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥
मूलं ॐ ह्रीं दुं अष्टभुजाश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥
मूलं ॐ ह्रीं दुँ नीलकण्ठश्रीपादुकां पूजयामि तर्पयामि नमः ॥३॥
मूलं ॐ ह्रीं दुं जगदम्बिकाश्रीपादुकां पूजयामि तर्पयामि नमः॥३॥

इत्यभ्यर्च्य षष्ठावरणम्

बिन्दूपरि मूलम्। शङ्खाय नमः। पद्माय नमः। खड्गाय नमः। बाणेभ्यो नमः। धनुषे नमः। खेटकाय नमः। शूलाय नमः। तर्जन्यै नमः।

मूलविद्यां त्रिरुच्चार्य श्रीनीलकराठं श्रीदुर्गापादुकां पूजयामि तर्पयामि नमः ॥३॥

इति मूलेन गन्धपुष्पाक्षतपुष्पधूपदीपनैवेद्याचमनीयताम्बूलच्छत्रचामरारात्रिकादीन् समर्पयेदिति सप्तमावरणम् । तत्र मूलेन बलिं निवेद्य । सौः सर्वविघ्नकृद्भ्यो भूतेभ्यः स्वहा । यां यूं योगीनीभ्यो नमः । ॐ वां वीं देवीपुत्र वटुकनाथ कपिलजटाभार भास्वरत्रिनेत्र ज्वालामुख एहि एहि इमां बलिं यथोपचितां गृहाण गृहाण स्वाहा। ॐ क्षां क्षें क्षेत्रपालाय नमः । इति बलिं दत्त्वा सङ्कल्पपूर्वं न्यासं विधाय देव्यग्रे मालामादाय यथाशक्ति "ॐ ह्रीं दुं दुर्गायै नमः" इति मूलविद्यां जप्त्वा

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥

इति देवदेव्योः समर्प्य, देव्यग्रे कवचसहस्रनामपाठं विधाय तदपि देवदेव्योः समर्प्य ।

प्रातःप्रभृति सायान्तं सायादिप्रातरन्ततः ।
यत् करोमि जगन्मातस्तदस्तु तव पूजनम् ।

इति पुष्पाञ्जलिं दत्त्वा योनिमुद्रया प्रणाम्य । संहारमुद्रया देवदेव्यौ हृदि आनीय । स्वयमपि सदाशिवो भूत्वा स्वशक्त्या सह पात्रार्पणं विधाय सुखं विहरेदिति नित्यपूजाविधिः ।

इति श्रीनित्यपूजायाः पद्धतिं गुह्यगोपिताम् ।
श्रीदुर्गासारसम्भूतां गोपयेत् साधकेश्वरि ॥

इति रुद्रयामले तन्त्रे श्रीदेवीरहस्ये दुर्गापद्धतिः समाप्ता ॥२॥

# अथ दुर्गाकवचम्

श्रीभैरव उवाच ।

अधुना देवि ! वक्ष्येऽहं कवचं मन्त्रगर्भकम् ।
दुर्गायाः सारसर्वस्वं कवचेश्वरसञ्ज्ञकम् ॥ १ ॥
परमार्थप्रदं नित्यं महापातकनाशनम् ।
योगिप्रियं योगगम्यं देवानामपि दुर्लभम् ॥ २ ॥
अनेन मन्त्रस्य विना सिद्धिर्देवि कलौ भवेत् ।
धारणादस्य देवेशि शिवस्त्रैलोक्यनायकः ॥ ३ ॥
भैरवो भैरवेशानि विष्णुर्नारायणो बली ।
ब्रह्मा पार्वति ! लोकेशो जिष्णुर्लेखर्षभः प्रिये ॥ ४ ॥
सूर्यस्तमोपहश्चन्द्रो मन्त्रामृतनिधिस्तथा ।
सेनानीश्च महासेनो विध्वंसी गजाननः ॥ ५ ॥
बहुनोक्तेन किं देवि दुर्गाकवचधारणात् ।
मर्त्योऽप्यमरतां याति साधको मन्त्रसाधकः ॥ ६ ॥
कवचस्यास्य देवेशि ! ऋषिः प्रोक्तो महेश्वरः ।
छन्दोऽनुष्टुप् प्रिये ! दुर्गा देवताष्टाक्षरा स्मृता ॥ ७ ॥
चक्रिबीजं च बीजं स्यान्मायाशक्तिरितीरिता ।
ॐ मे पातु शिरो दुर्गा ह्रीं मे पातु ललाटकम् ॥ ८ ॥
ॐ दुं नेत्रेऽष्टाक्षरा पातु चक्री पातु श्रुती मम ।
मठं गराडौ च मे पातु देवेशि रक्तकुराडला ॥ ९ ॥

वायुर्नासां सदा पातु रक्तबीजनिषूदिनी ।
लवणां पातु मे चोष्ठौ चामुण्डा चण्डघातिनी ॥ १० ॥
भीकीबीजं सदा पातु दन्तौ मे रक्तदन्तिका ।
ॐ ह्रीं श्रीं पातु मे कण्ठं नीलकण्ठाङ्कवासिनी ॥ ११ ॥
ॐ ऐं क्लीं पातु मे स्कन्दौ स्कन्दमाता महेश्वरी ।
ॐ सौं क्लीं मे पातु बाहू देवेशी बगलामुखी ॥ १२ ॥
ऐं श्रीं ह्रीं पातु मे वक्षो देवता विन्ध्यवासिनी ।
ॐ ह्रीं श्रीं क्लीं पातु कुक्षिं मम मातङ्गिनी परा ॥ १३ ॥
ॐ ह्रीं श्री ऐं पातु मे पार्श्वौ हिमाचलनिवासिनी ।
ॐ स्त्रीं हूं ऐं पातु पृष्ठं मम दुर्गार्त्तिहारिणी ॥ १४ ॥
ॐ क्रीं हूं पातु मे नाभिं देवी नारायणी सदा ।
ॐ ऐं क्लीं सौः सदा पातु कटिं कात्यायनी मम ॥ १५ ॥
ॐ ह्रीं श्रीं ह्रीं पातु शिश्नं देवी श्रीबगलामुखी ।
ॐ ऐं सौः क्लीं सौः पातु गुह्यं गुह्यकेश्वरपूजिता ॥ १६ ॥
ॐ ह्रीं ऐं श्रीं ह्सौः पायादूरू मम मनोन्मनाः ।
ॐ जूंसः सौः पातु जानू जगदीश्वरपूजिता ॥ १७ ॥
ॐ ऐं क्लीं पातु मे जंघे मेरुपर्वतवासिनी ।
ॐ ह्रीं श्रीं गीं सदा पातु गुल्फौ मम गणेश्वरी ॥ १८ ॥
ॐ ह्रीं दुं पातु मे पादौ पार्वती षोडशाक्षरी ।
पूर्वे मां पातु ब्रह्माणी वह्नौ मां वैष्णवी तथा ॥ १९ ॥
दक्षिणे चण्डिका पातु नैर्ऋते नारसिंहिका ।
पश्चिमे पातु वाराही वायव्ये सापराजिता ॥ २० ॥

उत्तरे पातु कौमारी चैशान्यां शांभवी तथा ।
ऊर्ध्वं दुर्गा सदा पातु पात्वधस्ताच्छिवा सदा ॥ २१ ॥
प्रभाते त्रिपुरा पातु निशीथे छिन्नमस्तिका ।
निशान्ते भैरवः पातु सर्वदा भद्रकालिका ॥ २२ ॥
अग्नेरम्बा च मां पातु जलान्मां जगदम्बिका ।
वायोर्मां पातु वाग्देवी वनाद् वनजलोचना ॥ २३ ॥
सिंहात् सिंहासना पातु सर्पात् सर्पान्तकासना ।
रोगान्मां राजमातङ्गी भूताद् भूतेशवल्लभा ॥ २४ ॥
यक्षेभ्यो यक्षिणी पातु रक्षोभ्यो राक्षसान्तका ।
भूतप्रेतपिशाचेभ्यः सुमुखी पातु मां सदा ॥ २५ ॥
सर्वत्र सर्वदा पातु ॐ ह्रीं दुर्गा नवाक्षरा ।
इतीदं कवचं गुह्यं दुर्गा सर्वस्वमुत्तमम् ॥ २६ ॥
मन्त्रगर्भं महेशानि कवचेश्वरसंज्ञकम् ।
वित्तदं पुण्यदं पुण्यं वर्म सिद्धिप्रदं कलौ ॥ २७ ॥
वर्म सिद्धिप्रदं गोप्यं परापररहस्यकम् ।
श्रेयस्करं मनुमयं रोगनाशकरं परम् ॥ २८ ॥
महापातककोटिघ्नं मानदं च यशस्करम् ।
अश्वमेधसहस्रस्य फलदं परमार्थदम् ॥ २९ ॥
अत्यन्तगोप्यं देवेशि कवचं मन्त्रसिद्धिदम् ।
पठनात् सिद्धिदं लोके धारणान्मुक्तिदं शिवे ॥ ३० ॥
रवौ भूर्जे लिखेद् धीमान् कृत्वा कर्माह्निकं प्रिये ।
श्रीचक्राग्रेऽप्यनन्येन साधको मन्त्रसिद्धये ॥ ३१ ॥

लिखित्वा धारयेद् बाहौ गुटिकां पुण्यवर्धिनीम् ।
किं किं न साधयेल्लोके गुटिकावर्मणोऽचिरात् ॥ ३२ ॥
गुटिका धारयेन्मूर्ध्नि राजानं वशमानयेत् ।
धनार्थी धारयेत्कण्ठे पुत्रार्थी कुक्षिमण्डले ॥ ३३ ॥
तामेव धारयेन्मूर्ध्नि लिखित्वा भूर्जपत्रके ।
श्वेतसूत्रेण संवेष्ट्य लक्षया परिवेष्टयेत् ॥ ३४ ॥
सुवर्णेनाथ संवेष्ट्य धारयेद् रक्तरज्जुना ।
गुटिका कामदा देवि ! देवानामपि दुर्लभा ॥ ३५ ॥
कवचस्यास्य गुटिकां धृत्वा मुक्तिप्रदायिनीम् ।
कवचस्यास्य देवेशि ! वर्णितुं नैव शक्यते ॥ ३६ ॥
महिमानं महादेवि ! जिह्वाकोटिशतैरपि ।
अदातव्यमिदं वर्म मन्त्रगर्भं रहस्यकम् ॥ ३७ ॥
अवक्तव्यं महापुण्यं सर्वसारस्वतप्रदम् ।
अदीक्षिताय नो दद्यात् कुचैलाय दुरात्मने ॥ ३८ ॥
अन्यशिष्याय दुष्टाय निन्दकाय कुलार्थिनाम् ।
दीक्षिताय कुलीनाय गुरुभक्तिरताय च ॥ ३९ ॥
शान्ताय कुलसक्ताय शाक्ताय कुलवासिने ।
इदं वर्म शिवे दद्यात्कुलभागी भवेन्नरः ॥ ४० ॥
इदं रहस्यं परमं दुर्गाकवचमुत्तमम् ।
गुह्यं गोप्यतमं गोप्यं गोपनीयं स्वयोनिवत् ॥ ४१ ॥

इति रुद्रयामले तन्त्रे श्रीदेवीरहस्ये दुर्गाकवचं समाप्तम् ॥ ३ ॥

# अथ दुर्गासहस्रनामानि

श्रीभैरव उवाच—

ॐ अधुना देवि ! वक्ष्यामि दुर्गासर्वस्वमीश्वरि ! ।
रहस्यं सर्वदेवानां दुर्लभं जन्मिनामपि ॥ १ ॥
श्रीदुर्गातत्त्वमुद्दिष्टसारं त्रैलोक्यकारणम् ।
मन्त्रनामसहस्रं च दुर्गायाः पुण्यदं परम् ॥ २ ॥
यं पठित्वा शिवे धृत्वा देवीनामसहस्रकम् ।
अश्वमेधायुतात्पुण्यं लोके सौभाग्यवर्धनम् ॥ ३ ॥
श्रेयस्करं विश्ववन्द्यं सर्वदेवनमस्कृतम् ।
गुह्यं गोप्यतमं देवि पठनात् सिद्धिदायकम् ॥ ४ ॥

ॐ अस्य श्रीदुर्गानामसहस्रस्य श्रीमहादेवऋषिः अनुष्टुपछन्दः श्रीदुर्गादेवता दुं बीजं ह्रीं शक्तिः ओं कीलकं धर्मार्थकाममोक्षार्थे दुर्गासहस्रनामपाठे विनियोगः ।

ॐ ह्रीं दुं जगदम्बाभा भद्रिका भद्रकालिका ।
प्रचण्डा चण्डिका चण्डी चण्डमुण्डनिषूदनी ॥ १ ॥
अनसूयास्तुटिस्तारा कृत्तिका कुब्जकालया ।
प्रलयस्थितिसम्भूतिर्विभूतिर्भयनाशिनी ॥ २ ॥
महामाया महाविद्या मूलविद्या चिदीश्वरी ।
मदालसा मदोत्तुङ्गा मदिरा मदनप्रिया ॥ ३ ॥
आलिर्बालिप्रसूः पुण्या पवित्रा परमेश्वरी ।
आदिदेवी कलाकान्ता त्रिपुरा जगदीश्वरी ॥ ४ ॥

मनोनाम महालक्ष्मीः सिद्धिलक्ष्मीः सरस्वती ।
सरित् कादम्बरी गोदा गुह्यकाली गणेश्वरी ॥ ५ ॥
गणाम्बिका जया तापी तपना तापहारिणी ।
तपोमयी दुरालम्भा दुष्टग्रहनिवारिणी ॥ ६ ॥
दुःखहा सुखदा साध्वी परमा भूतसृः सुरा ।
सुधासुधांशुनिलया प्रलयानलसन्निभा ॥ ७ ॥
समस्ता सम्पदम्भोजनिलया कलिकल्पया ।
विद्येश्वरी विश्वमयी विराट् छन्दोगतिर्मतिः ॥ ८ ॥
धृतिदादाम्बिकी दोला लोपामुद्रापटीयसी ।
गरिष्ठारिष्टहा दुष्टा कृशा काशी कुलाकुला ॥ ९ ॥
अकुलस्या पदन्यासा न्यासरूपा विरूपिणी ।
विरूपाक्षा कोटराक्षी कुलकान्ता पराजिता ॥ १० ॥
अजिता कुलिका लम्पा लम्पटा त्रिपुरेश्वरी ।
त्रितयी वेदविन्यासा संन्यासा सुमतिर्भया ॥ ११ ॥
अभया स्वर्मुखा देवी महौषधिरलम्बुषा ।
चपला चन्द्रिका चण्डा चण्डमुण्डनिषूदिनी ॥ १२ ॥
चपलाक्षी मदाविष्टा मदिरारुणलोचना ।
पुरीत्रिपुरसूराम्ना रमा रामा मनोरमा ॥ १३ ॥
सन्ध्यासन्ध्याभ्रशीला च शाला श्यामपयोधरा ।
शशाङ्कमुकुटा श्यामा सुरा सुन्दरलोचना ॥ १४ ॥
विषमाक्षी विशालाक्षी वशा वागीश्वरी शिला ।
मनःशिला च कस्तूरी मृगनाभिर्मृगेक्षणा ॥ १५ ॥

मृगारिवाहना माध्वी मानदा मत्तभाषिणी ।
नारसिंही वामदेवी वामा वामश्रुतिप्रिया ॥ १६ ॥
पण्यापुण्यगतिः पुण्या पुत्री पुण्यजनप्रिया ।
चामुण्डा उग्रचण्डा च महाचण्डतमा उमा ॥ १७ ॥
तमस्विनी प्रभा ज्योत्स्ना महाज्योति स्वरूपिणी ।
स्वरूपा सद्गतिः साध्वी सदा सद्रूपराजिता ॥ १८ ॥
सृष्टिः स्थितिः क्षेमकरी क्षमा क्षामोर्वतिस्तनी ।
क्षोणी क्षयकरी क्षीणा सर्वस्याशिववल्लभा ॥ १९ ॥
दन्तुरा दाडिमप्रीति दया दार्म्बिकसूदिनी ।
राक्षसी डाकिनी योग्या योगिनी योगवल्लभा ॥ २० ॥
कबन्धा कन्दराकृत्याकृत्तिका कण्ठकान्तका ।
कलङ्करहिता काली कम्पा काश्मीरवल्लभा ॥ २१ ॥
काशी कीर्तिप्रदा काञ्ची काश्मीरी कोकिलस्वना ।
प्रभावती महारौद्री रुद्रपत्नी रुजापहा ॥ २२ ॥
रतिस्तुतिस्तुरा तुर्या तोतुला भववासिनी ।
तपःप्रिया शरच्छ्रेष्ठा पङ्कपुत्री यमस्वसा ॥ २३ ॥
यामी यमान्तका याम्या यमुना स्वर्नदी तडित् ।
नारायणी विश्वमाता भवानी पापनाशिनी ॥ २४ ॥
विगता विगतप्रश्ना कृशा कृष्टासिधारिणी ।
वारी वारा वरधरा वरदी वीरसूदिनी ॥ २५ ॥
वीरसूर्वामनाकारा दीर्घसत्रा दयावती ।
धरी धनप्रिया धात्री धात्रीवल्ली महोदरी ॥ २६ ॥

गणेश्वरी गया काञ्ची काञ्ची किङ्किणिघण्टिका ।
माया मायावती मत्ता प्रमत्ता प्रवरीश्वरी ॥ २७ ॥
पौरन्दरी शची सीता शीतातपस्वभावजा ।
स्वाभाविकगुणा गराधा गाम्भीर्यगुणभूषणा ॥ २८ ॥
सूतिः सूर्यकला सुप्ता सप्तसप्तिरूपिणी ।
तेजस्विनी सदानन्दा सभा सन्तोषवर्धिनी ॥ २९ ॥
तर्पणा कर्षणा होता सङ्कल्पा शुभमात्रिका ।
दर्भाग्रोणिकला श्रान्ता समिधा सुरवेदिका ॥ ३० ॥
धूम्राद्गतिश्चरमतिश्चामीकररुचिश्चिता ।
चिन्तानलेश्वरी नीला कालानिलसरस्वती ॥ ३१ ॥
अपर्णा सुफला यज्ञा सभया निर्भया वहा ।
भीमस्वना भर्गशिखा भास्वती भास्करा विभा ॥ ३२ ॥
विभावरी नदी नद्या नद्यावर्तप्रवर्तिनी ।
पृथ्वीधरा विषधरा विश्वगर्भा प्रवर्तिका ॥ ३३ ॥
विश्वमाया विश्वबाला विश्वम्भरविलासिनी ।
उरगेशा पद्मनाभा पद्मनाभप्रसूः प्रजा ॥ ३४ ॥
तोरणा तुलसी दीक्षा दक्षा दाक्षायणी धृतिः ।
सम्पुटा शयना शय्या शासना शमनान्तका ॥ ३५ ॥
श्यामा कवर्णा शार्दूली शष्पनीलांशुवल्लभा ।
स्तुत्या प्रणीता नियतिः कम्पना कम्पहारिणी ॥ ३६ ॥
चण्डिका भाचरा चीना दीना दीनजनप्रिया ।
वसुन्धरा वासवेशी वसुनाथा वटेश्वरी ॥ ३७ ॥



समुद्रसङ्गमा पूर्णा तरला तरुवासिनी ।
पार्वती पासरी मान्या माननीया मधुप्रिया ॥
माधवी मधुपानस्थामन्दिरा मन्दुरा मृगी ।
मृगया रुरुषा रेवा रेवती रमणी रमा ॥
ऋद्धिहस्ता सिद्धिहस्ता अन्नपूर्णा महेश्वरी ।
जगद्रूपा जगज्योतिः समस्तासुरघातिनी ॥
गारुडी गगना लम्बा लम्बमानकचप्रिया ।
पीताम्बरा पीतपुष्पा पूतना गीतवल्लभा ॥
बलाका जगदन्ता च जरा जयवरप्रदा ।
प्रीतिः कठोर-वदना करालरदना रमा ॥
जिह्वा हस्ता च बगला प्रजया विनयप्रदा ।
कौरी करालवपुषी शेमुषी मल्लिका मषी ॥
उत्तोर्णा उर्णिका तीक्ष्णा श्लक्ष्णा कामेश्वरी शिवा
शिवपत्नी सरोजाक्षी पद्महस्ता सरस्वती ॥
तथ्या पथ्यकृती रथ्या रथस्था विततासुरा ।
महती रागिनी भार्गी शुचिहासा हरीश्वरी ॥
हरिरत्नांशुलसिता लक्ष्मीनायकसुन्दरी ।
अम्बालिकाम्बा देवेशी अनघाग्निशिखा श्रुतिः ॥
अलसाऽल्पगतिश्चान्त्याऽनन्ताऽनन्तगुणाश्रया ।
प्रभाचादित्यसंकाशा आदित्यकुलसुन्दरी ॥ ४
आत्मरूपाऽधिशमनी आदिमायाऽधिदेवता ।
इन्द्रप्रसूरिनद्योतिरिनाग्निशशिलोचना ॥ ४

उमा उर्वी उरुभुजा उत्तुङ्गा चोलवाहना।
उत्तङ्का चोत्तमा ध्येया उल्लासा चोरुगर्विणी ॥ ४९
ऊष्मा ऊर्णा च गुर्वङ्गी ऊर्ध्वाक्षी ऊर्ध्वमस्तिका।
ऋद्धिर्ऋचा ऋवर्णेशी ऋणाहर्त्री च वार्तकी ॥ ५०
ऋद्धिजा चारुवस्त्राच ऋणिवासा महालसा।
लृकारा लृक्कुरा लीना लृकारवरधारणी ॥ ५१
एणाङ्कमुकुटा चेहा चारुचन्द्रकला कला।
ऐंकारगतिरैश्वर्यदायिनी चेश्वरीगतिः ॥ ५२
ओंकारबीजरूपा च औंत्रिकी बीजधारिणी।
अम्बिका लम्पिकांपा च अःस्वरोद्गमरूपिणी ॥ ५३
काली च भद्रकाली च कालिका कालवल्लभा।
कदम्बनिलया कन्था काञ्ची मण्डनमण्डिता ॥ ५४
कलङ्करहिता कुर्या काञ्चनाभा करोरगा।
कनकाचलवासा च करुणा कुलमानसा ॥ ५५
कुलस्था कौलिनी कुल्या कुरुकुल्ला कपालिनी।
कपालकुलनिर्विग्णा क्रींकारा कज्जलोचना ॥ ५६
खञ्जनाक्षी खड्गधरा खेटकायुधभूषणा।
गणाध्यक्षा गजगतिर्गणेश-जननी गदा ॥ ५७
गोधा गदाधरप्राज्या गगनेशी महोमला।
घुर्घुरा घटभूघूका घृसृणाभा घनेश्वरी ॥ ५८
घनसारप्रियासाभ्याघवर्णारुतभूषणा।
चान्द्री चन्द्रस्तुता चार्वी चन्द्रिका चण्डनिःस्वना ॥ ५९

चञ्चरीकस्वना देवी चञ्चच्चामीकराङ्गदा।
छुनिकाच्छरिकाच्छुच्छा च्छत्रचामरभूषणा ॥ ६० ॥
झींकारी जलजिह्वा च जृम्भिका जलयोगिनी।
जटाजूटधरा जातिर्जातीपुष्पसमानना ॥ ६१ ॥
जलेश्वरी जगद्ध्येया जानकी जननी जटा।
झंझाझरी झरत्कारी जरत्काञ्चीरकिङ्किणी ॥ ६२ ॥
झम्बिकाज्झम्पकृज्झम्पा पुत्रत्रासनिवारिणी।
ञाणुरूपाञवकहस्ता ञकाराक्षरसम्मता ॥ ६३ ॥
टङ्कायुधा महातथ्या टङ्कारा टणाटसी।
ठकुठा ठत्कुराठानी डिढोरवनाडला ॥ ६४ ॥
डराडानिलमया ढंडा ढणत्कारकराढसा।
णान्तानणी णीलायुधा णवर्णाक्षरभूषणा ॥ ६५ ॥
तरुणी तुन्दिला तोन्दा तामसी तामसप्रिया।
ताम्रानना ताम्रकरा ताम्राम्बरधरा तुला ॥ ६६ ॥
तापत्रयहरा तापी तैलासक्ता तिलोत्तमा।
स्थाणुपत्नी स्थली स्थूला स्थितिः स्थैर्यधरा स्थुला ॥ ६७ ॥
दन्तनी दन्तरा दर्वी देवका देवनाका।
दामिनी शमनी दण्ड्या दण्डहस्ता दुरानतिः ॥ ६८ ॥
दुर्धारा दुर्गतिर्द्राक्षा द्राक्षा द्रविडवासिनी।
दूरस्था दुन्दुभिर्धाना दरदा दरनाशिनी ॥ ६९ ॥
धुन्धघ्नीद्रनगाद्रष्टा दयादास्विक्यनाशिनी।
धर्म्या धर्मप्रसूर्धन्या धनदा धातृवल्लभा ॥ ७० ॥

धनुर्धरा धनुर्वल्ली धनुष्कवरदायिनी ।
धूमाला धूम्रवदना धूमश्रीर्धूम्रलोचना ।। ७१

नलिना नर्तका नान्ता नङ्गा नलिनलोचना ।
निर्मला निगमाचारा निम्नगा नगजा निमिः ।। ७२

नीलग्रीवा निरोहा च नीपोपवनवासिनी ।
निरञ्जनजनी जन्या निद्रालुर्नीरवासिनी ।। ७३

नटिनी नाद्यनिरता नवनीतप्रियानिला ।
नारायणी निराकारा निर्लेपा नित्यवल्लभा ।। ७४

पद्मावती पद्मकरा पुत्रदा पुत्रवत्सला ।
परोत्तरा पुरी पाठा पीतश्रोत्रा पुलोमजा ।। ७५

पुष्पिणी पुस्तककरा पटुपाठीरवाहना ।
पापघ्ना शम्पिना पापी लोपली परसुन्दरी ।। ७६

पिशाची च पिशाचघ्नी पानपात्रधरापुटा ।
पूर्णिमा पञ्चमी पौत्री पुरूरववरप्रदा ।। ७७

पञ्चयज्ञा पञ्चशरी पञ्चाशति मनुप्रिया ।
पाञ्चाली पञ्चपुत्रा च पूजा पूर्णमनोरथा ।। ७८

फलिनी फलदात्री च फल्गुस्ता च फणिप्रिया ।
स्फिरङ्गहा स्फीतमतिः स्फीतिः स्फीतिमती स्फुटा ।। ७९

बलमाया बलस्तुत्या विहसेना बलाबला ।
बगलेश्वरपूज्या च बलिनी बलवर्धिनी ।। ८०

बुद्धमाता बौद्धमतिर्बद्धबन्धन-मोचिनी ।
भगिनी भगमाला च भगलिङ्गा मृतस्रवा ।। ८१



भीमेश्वरी च भीरुराढा भगेशी भगसर्पिणी ।
भगलिङ्गस्थिता भग्या भाग्यदा भगमालिनी ।। ८२ ।।

मत्ता मनोहरा मेना मैनाकजननी सुरी ।
मुरली मानवी होत्री वहस्विजनमोदिता ।। ८३ ।।

मत्तमातङ्गगा माद्री मरालगतिरञ्चला ।
यज्ञेश्वरीश्वरी यज्ञा यजुर्वेदप्रिया श्रुता ।। ८४ ।।

यशोवती यतिस्था च यतात्मा यतिवल्लभा ।
यवनी यौवनस्था च यवा यत्नजनाश्रया ।। ८५ ।।

यज्ञसूत्रप्रदा ज्येष्ठा यज्ञमूर्धपस्फुलिनी ।
रञ्जिता राजपत्नी च राजसूर्यफलप्रदा ।। ८६ ।।

रजोवती रजश्चित्रा राज्यदा राज्यवर्द्धिनी ।
राज्ञी रात्रिचरेशानि रोगघ्नी त्रिपुरेश्वरी ।। ८७ ।।

ललिता लतिका लाप्या लोपाललनलालसा ।
लाटीरद्रुमपासा च पाटीरद्रुमवर्तिनी ।। ८८ ।।

लेखा ललज्जटा जूटा जङ्घिता सुरसुन्दरी ।
लोकेशवरदा लीया लयकर्त्री महालया ।। ८९ ।।

विविधगग्ना वाणी च वेणा वेणुवनेश्वरी ।
वर्धमानावदर्शाढ्या वाराही वीरमातृका ।। ९० ।।

शङ्खिनी शङ्खवलया शङ्खायुधधराशमा ।
शशिमण्डलमध्यस्था शीतलाम्बुनिवासिनी ।। ९१ ।।

श्मशानस्था महाघोरा श्मशाननिलयेश्वरी ।
शिशुः सूत्रधरा सत्रा समस्तकुलचारिणी ।। ९२ ।।

सप्तमी सात्त्विकी सत्त्वा मूत्रस्था सुरसर्दिनी ।
सुरेश्वरी सम्प्रदद्या समस्थाचलचारिणी ॥ ९३ ॥
समदा समितिः सस्मा सवना सवनेश्वरी ।
हंसी हरप्रिया हास्या हरिनेत्रा हराम्बिका ॥ ९४ ॥
हेषा हटेश्वरी हीरा हलिनी फलदायिनी ।
हेहा हाहारववला हालाहलहताशया ॥ ९५ ॥
क्षमा क्षेमप्रदा क्षामा क्षौमाम्बरधरा क्षया ।
क्षितिः क्षीरप्रिया लक्ष्मीः क्षितिभृत् तुलया क्षुधा ॥ ९६ ॥
क्षत्रियी ब्राह्मणी क्षेत्रा क्षपाक्षावीमण्डिता ।
लंक्षः बीजस्वरूपा च क्षकाराक्षरमातृका ॥ ९७ ॥
दुर्गन्धनाशनी दुर्वा दुर्गभा दुर्गनाशिनी ।
दुर्गा दुर्गातिनाशिनी ओंह्रींदुंबीजमण्डिता ॥ ९८ ॥
इति नामसहस्रं तु मन्त्रगर्भं महाबलम् ।
दुर्गा यद् दुर्गतिहरं सर्वदेवनमस्कृतम् ॥ ९९ ॥
सर्वमन्त्रमयं दिव्यं देवदानवपूजितम् ।
श्रेयस्करं महापुण्यं महापातकनाशनम् ॥ १०० ॥
यः पठेत्पाठयेद्वापि शृणोति श्रावयेदपि ।
स महापातकैर्मुक्तो देवदानवसेवितः ॥ १०१ ॥
इह लोके श्रियं भुक्त्वा परत्र त्रिदिवं व्रजेत् ।
दुर्गानामसहस्रं तु मूलमन्त्रैकसाधनम् ॥ १०२ ॥
अर्धरात्रे पठेद् वीरो मधुरस्मयसेवितः ।
त्रिवारं वर्म पूर्वन्तु भवेद् वागीशसन्निभः ॥ १०३ ॥



यः पठेद् देवि ! मध्याह्ने स्त्रीयुतो मुक्तकुन्तलः ।
तस्य वैरिकुलं त्रस्येन्नश्यति चैव दर्शनात् ॥ १०४ ॥
दहनादिव देवेऽशि ! पतङ्गकुलमद्रिजे ! ।
यः पठेद् वेतसीमूले सायं पूजितभैरवः ॥ १०५ ॥
तस्यास्यकुहराद् वाणी निः सरेद् गद्यपद्यभाक् ।
यः पठेत् सततं देवि ! शयने स्त्रीरताकुलः ॥ १०६ ॥
स भवेद् वैरिविध्वंसी धनेन धनदोपमः ।
वाग्भिर्वागीशसदृशः कवित्वेन सितोपमः ॥ १०७ ॥
तेजसा सूर्यसंकाशो यशसा सूर्यसन्निभः ।
बलेन वायुतुल्योऽपि लक्ष्म्या गीर्वाणनायकः ॥ १०८ ॥
देवि ! किं बहुनोक्तेन स भवेद् भैरवोपमः ।
स्तम्भनाकर्षणोच्चाटवशीकरणकक्षमः ॥ १०९ ॥
रवौ भूर्जे लिखेद् देवि ! निशीथे वाऽष्टगन्धकैः ।
स्तन्यरेतोरजस्कैः साधको मन्त्रसाधकः ॥ ११० ॥
लिखित्वा वेष्टयन् नामसहस्रमणिमोश्वरि ।
श्वेतसूत्रेण सम्वेष्ट्य लाक्षया परिवेष्टयेत् ॥ १११ ॥
सुवर्णरजताद्यैश्च वेष्टयेत्पीतसूत्रकैः ।
सम्पूज्य गुटिकां देवि ! शुभेऽह्नि साधकोत्तमः ॥ ११२ ॥
धारयेन्मूर्ध्नि वा वाहौ गुटिकां कामदायिनीम् ।
रणे रिपून् विजित्याशु कल्याणि ! गृहमाविशेत् ॥ ११३ ॥
वन्ध्या वाम-भुजे धृत्वा कृत्वा साधकपूजनम् ।
पुत्रान् लभेन्महादेवि ! साक्षाद् वैश्रवणोपमान् ॥ ११४ ॥

गुटिकैषा महादिव्या गोप्या कामफलप्रदा ।
साधकैः सततं पूज्या साक्षाद् दुर्गास्वरूपिणी ॥ ११५
योऽर्चयेत्साधको दुर्गागुटिकां धारयेत् प्रिये ! ।
पठेद् वर्म शिवे मन्त्रं नामसाहस्त्रिकं परम् ॥ ११६
अङ्गस्तोत्रं फलं तस्य देवि ! वक्ष्येऽधुना शृणु ।
वने राजकुले वापि दुर्भिक्षे शत्रुसङ्कटे ॥ ११७
वधे यक्ष-पिशाचादिभूत-प्रेत-भये तथा ।
वीरो विगत भीर्देवि ! सर्वत्र विजयी भवेत् ॥ ११८
स्तम्भयेद् वायुसूर्यं च चन्द्रादीन् साधकोत्तमः ।
मोहयेत् त्रिजगत्सद्यः कान्ताश्चाकर्षयेद् ध्रुवम् ॥ ११९
मारयेदखिलाञ् शत्रूनुच्चाटयति वैरिणः ।
वशयेद् देवताः सद्यः किं पुनर्मायया शिवे ॥ १२०
शमयेदखिलान् रोगान् महोत्पातानुपद्रवान् ।
किं किं न लभते वीरो दुर्गापञ्चाङ्गपूजनात् ॥ १२१
इदं रहस्यं दुर्गाया अष्टाक्षर्या महेश्वरि ।
सर्वस्वं सारतत्त्वं च मूलविद्यामयं परम् ॥ १२२
महाचीनक्रमस्थानां साधकानां यशस्करम् ।
पठेत्संपूजयेद् देव्या मन्त्रनामसहस्त्रकम् ॥ १२३
इदं सारं हि तन्त्राणां तत्त्वानां तत्त्वमुत्तमम् ।
दुर्गानामसहस्त्रं तु तव भक्त्या प्रकाशितम् ॥ १२४
अभक्ताय न दातव्यं गोप्तव्यं पशुसन्निधौ ।
अभक्तेभ्योऽपि पुत्रेभ्यो दत्त्वा नरकमाप्नुयात् ॥ १२५



दीक्षिताय कुलीनाय गुरुभक्तिरताय च ।
शान्ताय भक्तियुक्ताय देयं नामसहस्त्रकम् ॥ १२६ ॥
विना दानं न गृह्णीयान्न दद्याद् दक्षिणां विना ।
दत्त्वा गृहीत्वाप्युभयोः सिद्धिहानिर्भवेद् ध्रुवम् ॥ १२७ ॥
इदं नामसहस्त्रं तु गुप्तगोप्यतमं शिवे ! ।
तव भक्त्या मयाख्यातं गोपनीयं स्वयोनिवत् ॥ १२८ ॥

इति श्रीरुद्रयामले तन्त्रे देवीरहस्ये दुर्गासहस्त्रनामाख्यं स्तोत्रं समाप्तम् ॥ ४ ॥

## अथ दुर्गास्तोत्रम्

भैरव उवाच—

अधुना देवि ! वक्ष्यामि दुर्गास्तोत्रं मनोहरम् ।
मूलमन्त्रमयं दिव्यं सर्वसारस्वतप्रदम् ॥ १ ॥
दुर्गार्तिशमनं पुण्यं साधकानां जयप्रदम् ।
दुर्गाया अङ्गभूतं तु स्तोत्रराजं परात् परम् ॥ २ ॥
श्रीदुर्गास्तोत्रराजस्य ऋषिर्देवो महेश्वरः ।
छन्दोऽनुष्टुब् देवतापि श्रीदुर्गाष्टाक्षरा शिवे ! ॥ ३ ॥
दुं बीजञ्च परा शक्तिः नमः कीलकमीश्वरि ! ।
धर्मार्थकाममोक्षार्थे श्रीदुर्गास्तोत्रपाठे विनियोगः ।

### अथ ध्यानम्

दूर्वानिभां त्रिनयनां विलसत्किरीटां,
शंखाब्जखड्गशरखेटकशूलचापाम् ।

सन्तर्जनीं च दधतीं महिषासनस्थां
दुर्गान्तवारकुलपीठगतां भजेऽहम् ॥ १
तारं हारं मन्त्रमालासुबीजं
ध्यायेदन्तर्यो वलं वालकान्तः ।
तस्य स्मारं स्मारमङ्घ्रिद्वयीन्द्राग्
रभ्यायाति स्वर्गता कामवश्या ॥ २
मायां जपेद् यस्तव मन्त्रमध्ये दुर्गे सदा दुर्गतिखेदखिन्नः ।
भवेत् स भूमौ नृपमौलिमालामाणिक्यनिर्घृष्टपदारविन्दः ॥३
चाक्रियं यदि जपेत् तवाङ्घ्रिके, चक्रमध्यगत ईश्वरीश्वरि ! ।
साधको भवति चक्रवर्तिनां, नायको नयविलासकोविदः ॥४
चक्रिबीजमपरं स्मरेच्छिवे योऽरिवर्गविहिताहितव्ययः ।
आजिमण्डलगते जयेन्द्रिपून् वाजिवारणरथाश्रितो नरः ॥५
दुर्गाबीजं यो जपेत् प्रेतभूमौ सायं माया भस्मना लिप्तकायः ।
गीर्वाणानां नायको देवि ! मन्त्री भुक्त्वा राज्यं प्राज्यमाज्यं करोति।
वायव्यबीजं यदि साधको जपेत् प्रियाकुचद्वन्द्वविमर्दनक्षमः ।
समस्तकान्ताजननेत्रवागुरोविलासहंसो भविता स पार्वति ! ॥७
विश्वे विश्वेश्वरि यदि जपेत् कामवेलाकलार्तौ
रात्रौ मात्राक्षरविलसितम्मास ईशानि मामः ।
तस्य स्मेराननसरसिजा भ्राजमानाङ्गलक्ष्मी-
र्वश्यावश्यं सुरपुरवधूमौलिमालावशामा ॥ ८
भूगेहाश्रितवह्निवृत्तविलसन्नागारवृत्ताश्रित,
व्यग्रारोल्लसिताग्निकोणविलसच्छ्रीबिन्दुपीठस्थिताम् ।



ध्यायेच्चेतसि शर्वपत्नि भवतीं माध्वीरसाघूर्णितां,
यो मन्त्री स भविष्यति स्मरसमः स्त्रीणां धरण्यां दिवि ॥९॥
दुर्गास्तवं मनुमयं मनुराजमौलि-
माणिक्यमुत्तमशिवाङ्गरहस्यभूतम् ।
प्रातः पठेद् यदि जपावसरेऽर्चनायां
भूमौ भवेत् स नृपतिर्दिवि देवनाथः ॥१०॥
इदं स्तोत्रं महापुण्यं पञ्चाङ्गैकशिरोमणिम् ।
यः पठेदर्धरात्रे तु तस्य वश्यं जगत् त्रयम् ॥ ११ ॥
इदं पञ्चाङ्गमखिलं श्रीदुर्गाया रहस्यकम् ।
सर्वसिद्धिप्रदं गुह्यं सर्वाशापरिपूरकम् ।
गुह्यं मन्त्ररहस्यं तु तव भक्त्या प्रकाशितम् ।
अभक्ताय न दातव्यमित्याज्ञा पारमेश्वरी ॥ १३ ॥
श्रीदेव्युवाच—
भगवन् ! भवता तेन कथनेन महेश्वर ! ।
श्रीपञ्चाङ्गस्य दुर्गाया अद्य क्रीतास्म्यहं परम् ॥ १४ ॥
श्रीभैरव उवाच—
इदं रहस्यं परमं दुर्गासर्वस्वमुत्तमम् ॥ १४ ॥
पञ्चाङ्गं वर्णितं गोप्यं गोपनीयं स्वयोनिवत् ॥ १५ ॥

इति श्रीरुद्रयामले तन्त्रे देवीरहस्ये दुर्गास्तोत्रं पूर्णम् ॥ ५ ॥

## अथ मन्त्रविद्या—

ॐ श्रीशैलराजशिखरे नानाद्रुमलताकुले ।
वसन्तलक्ष्मीनिलये समासीनमुमापतिम् ॥ १ ॥
एकदा देवमीशानं शशिशेखरमीश्वरम् ।
उमाश्रितार्धवपुषं देवदानवसेवितम् ॥ २ ॥
ध्यानासक्ताक्षित्रितयं जटाजूटलतारुणम् ।
भस्माङ्गरागधवलं नारायणनमस्कृतम् ॥ ३ ॥
ब्रह्मादिदेवप्रणतं गन्धर्वजनवन्दितम् ।
यक्षराक्षसनागेन्द्रनगेन्द्रकुलपूजितम् ॥ ४ ॥
भैरवं भैरवाकारं गिरिशं वरमेश्वरम् ।
उत्थाय विनता भूत्वा परिपृच्छति पार्वती ॥ ५ ॥
भगवन् ! सर्वलोकेश ! सर्वलोकनमस्कृत ! ।
गुणातीत ? गणाध्यक्ष ! भूतेश्वर ! महेश्वर ॥ ६ ॥
सृजत्यवति निल्यान्ते संहरत्यमितं जगत् ।
चराचरं भवानेव किं पुनर्जपसि प्रभो ! ॥ ७ ॥
किं ध्यायसि महादेव ! सततं भक्तवत्सल ! ।
वद शीघ्रं दयाम्भोधे ! यद्यहं प्रेयसी तव ॥ ८ ॥

श्रीभैरव उवाच—

देवि ! किं ते प्रवक्ष्यामि रहस्यमिदमद्भुतम् ।
सर्वस्वं सारभूतं मे सर्वेषां तत्त्वमुत्तमम् ॥ ९ ॥
लक्षवारसहस्राणि वारितासि पुनः पुनः ।
स्त्रीस्वभावान् महादेवि ! पुनस्त्वं परिपृच्छसि ॥ १० ॥



अद्य भक्त्या तव स्नेहाद् वक्ष्यामि परमाद्भुतम् ।
देवीरहस्यतन्त्राख्यं तन्त्रराजं महेश्वरि ! ॥ ११ ॥
सर्वागमैकमुकुटं सर्वसारमयं ध्रुवम् ।
सर्वतन्त्रमयं दिव्यां पटलैर्दशभिर्युताम् ॥ १२ ॥
अनुक्रमणिकां दिव्यां शृणु तन्त्रस्य पार्वति ! ।
यस्याः श्रवणमात्रेण कोटिपूजाफलं लभेत् ॥ १३ ॥
श्रीविद्यानिर्णयो देवि ! मन्त्रसाधनको परः ।
शिवमन्त्रप्रकाशाख्यो दीक्षाविधिरनुत्तमः ॥ १४ ॥
पुरश्चर्याविधिर्देवि पञ्चरत्नीश्वरे क्रमः ।
होमसाधनकश्चैव चक्रपूजाविधिः परः ॥ १५ ॥
आचारनिर्णये देवि ! दशमो द्वादशो विधिः ।
तत्रादौ देवि ! वक्ष्येऽहं दुर्गाभुवनमद्भुतम् ॥ १६ ॥
जपं नाम महादिव्यं बहुविस्तारविस्तृतम् ।
नानारत्नसमकीर्णं सूर्यकोटिसमप्रभम् ॥ १७ ॥
अप्रमेयमसंख्येयमगम्यं सर्ववादिनाम् ।
इदं दिव्यजपं नाम भुवनं परमेश्वरि ! ॥ १८ ॥
तत्रैव वसते दुर्गा नवरूपात्मिका परा ।
या देवदेवीवरदा सर्वलोकैकसुन्दरी ॥ १९ ॥
या दुर्गेति स्मृता लोके ब्रह्माण्डोदरवर्तिनी ।
विष्णुना तपसा पूर्वमाराध्य परमेश्वरीम् ॥ २० ॥
माहिषस्यासुरेन्द्रस्य वधार्थायावतारिता ।
योगमाया महामाया सर्वदा परमेश्वरी ॥ २१ ॥

तामेवाहर्निशं ध्यायेच्छ्रीविद्यां परमां जपेत् ।
तामद्याहं प्रवक्ष्यामि विद्याचरणदायिनीम् ॥ २२ ॥
यं श्रुत्वा स शिवो जातः पञ्चनादात्मकः शिवः ।
यथा भूद्धरि दीनासा दुर्गा निष्कलरूपिणी ॥ २३ ॥
साक्षाद् भुवनरूपापि महाज्योतिःस्वरूपिणी ।
तदाशहवकाले तु ज्योतिरूपी महेश्वरि ! ॥ २४ ॥
शिवः प्रभामण्डलतो निर्गतश्चेतनो विभुः ।
अशृणोन्नादमाधारं जगतां बीजमुत्तमम् ॥ २५ ॥
अवमं सारमायां त्वं सृष्टोग्रमनुनायकः ।
इति श्रुत्वा परानादं तारमित्यभिधीयते ॥ २६ ॥
शिवो जजाप सहसा बीजं त्रिजगतां शिवे ! ।
तेन मायेति शब्दं स शुश्राव गगनात् ततः ॥ २७ ॥
दमं भज महेशानं सदानन्दालयं परम् ।
बिन्दुनादमयो देवः शिवोऽभूत् परमेश्वरः ॥ २८ ॥
ततो नादं स शुश्राव दुष्टकर्णाविवर्जिताम् ।
दूर्वां भजेति स शिवः पञ्चनादात्मकोऽभवत् ॥ २९ ॥
ततो जप्त्वा पराविद्यामसृजज्जगदम्बिके ! ।
आदौ वायुं शिवः सृष्ट्वा ततः सृष्टिर्यदेच्छया ॥ ३० ॥
इच्छामात्रं शिवे विश्वं विश्वेश्वरि ! चराचरम् ।
ससर्ज लवमात्रं स शितिकण्ठः शिवः शिवे ! ॥ ३१ ॥
इति मां गुप्तविद्यां तु लब्ध्वा गुरुपदार्चनात् ।
किं किं न साधयेल्लोके साधको मन्त्रसाधकः ॥ ३२ ॥



[illegible] वह्निं च कामं च धनं वृत्तं च साधकः ।
वशी कुर्याद् यथा बुद्ध्या येन नृर्याकुलं भवेत् ॥ ३३ ॥
श्रीचक्रमिदमाधारं देव्या विभवकारणम् ।
[illegible] सर्वस्वमम्बायाः पूज्यं साधकसत्तमैः ॥ ३४ ॥
चक्रे लिखेन्महादेवि ! पूज्यमब्जार्कयोर्दलैः ।
येन देवी महामाया श्रीदुर्गा सुप्रसीदति ॥ ३५ ॥
चक्रे सम्पूजयेद्यस्तु नीलाभां दाहनीं द्युतिम् ।
वह्नीन्दुसूर्याम्बुरजं मण्डलाकारमर्चयेत् ॥ ३६ ॥
लसन्मुकुटरोचिष्णुः स भवेत् साधकोत्तमः ।
तस्य शंखनिभा कीर्तिर्भ्रमते भुवनत्रये ॥ ३७ ॥
सुरासुरगन्धर्वा वशं यान्ति महेश्वरि ! ।
[illegible]रसावरसानन्दमयो भूत्वा जपेन्मनुम् ॥ ३८ ॥
[illegible]कास्तस्य तुष्यन्ति साधकस्याङ्गपूजनात् ।
तस्य रोगा विनश्यन्ति सर्वे शूलादयोऽचिरात् ॥ ३९ ॥
[illegible]जनोन्तव वक्ष्यामि रिपवो यान्ति विद्रुताः ।
तस्य गेहं धनं गावो मनोषा विष्टिरङ्गजाः ॥ ४० ॥
दुर्गा रत्नवता भूमिस्तस्य पीठं मनोहरम् ।
साधकस्य भवेदेवं सम्पत्तिर्बहुदार्चनात् ॥ ४१ ॥
एवं ध्यायेन्महादेवीं दुर्गां दुर्गतिनाशिनीम् ।
ध्यानेन येन देवेन्द्रो भविष्यति हि साधकः ॥ ४२ ॥
इतीद देवि ! तत्त्वं ते कथितं परमाद्भुतम् ।
[illegible]व्यमदातव्यं गोपनीयं स्वयोनिवत् ॥ ४३ ॥
इति श्रीरुद्रयामले यन्त्रे श्रीदेवीरहस्ये मन्त्रविद्याप्रकाशः ॥ १ ॥

—: ❀ :—

## अथ मन्त्रसाधनप्रकारः

श्रीभैरव उवाच—

मन्त्रसाधनकं वक्ष्ये रहस्यं सर्वमन्त्रिणाम् ।
येन साधनमात्रेण मन्त्रः सिद्धिमुपैष्यति ॥ १ ॥
विनोत्कीलनमन्त्रेण न मन्त्रः सिद्धिदायकः ।
विना सञ्जीवनेनापि सम्पुटेन विना शिवे ॥ २ ॥
विश्वमादौ मनोर्दद्यात् तारं दद्यात् तथाञ्चले ।
मनुरुत्कीलनाख्यो यः सर्वसिद्धिप्रदः शिवे ॥ ३ ॥
चाक्रिकं नामबीजं तु दद्यादादौ मनोः शिवे ।
तदग्रे नाम विन्यस्य तारमाये तदग्रतः ॥ ४ ॥
मनोरन्ते स्वरान् दद्यान्मनुः सञ्जीवनाभिधः ।
ततः सिद्धिर्मनुर्देवि ! जपेन्मान्त्रिकसत्तमः ॥ ५ ॥
यथाशक्ति ततो दद्यात् सम्पुटं साधकोत्तमः ।
तारं परां चक्रिबीजं विश्वमन्तेभिधं न्यसेत् ॥ ६ ॥
सम्पुटाख्योस्त्वयं मन्त्रः सर्वाशापूरकः स्मृतः ।
एवं संस्कृतमीशानि मनुदेव्या जपेत् सदा ॥ ७ ॥
सर्वसिद्धिमवाप्नोति साधको मन्त्रसाधकः ।
इतीदं मन्त्रतत्त्वन्तु साधनाख्यं महेश्वरि ! ॥ ८ ॥
गुह्यातिगुह्यगुप्तं च गोप्तव्यं साधकोत्तमैः ॥ ९ ॥

इति श्रीरुद्रयामले तन्त्रे देवीरहस्ये मन्त्रसाधनप्रकारः ॥ २ ॥

## अथ शिव-विद्या

श्रीभैरव उवाच—

अधुना शिवविद्यां ते वक्ष्यामि परमार्थदाम् ।
सर्वसिद्धिमयीं साध्यां सर्वतन्त्रेषु गोपिताम् ॥ १ ॥
केवलं यो जपेच्छाक्तं मनुं शैवं तु नो जपेत् ।
जन्मकोटिषु जप्तोपि न मनुः सिद्धिभाग् भवेत् ॥ २ ॥
यस्या देवास्तु यो देवः शिवस्तस्याः शिवो भवेत् ।
येन विद्या महादेवि ! कलौ सिद्ध्यति सत्वरम् ॥ ३ ॥
कालिकाया महाकालः सुमुख्या अमृतेश्वरः ।
कामेश्वरस्त्रिपुरायाः शिव इत्येवमीश्वरि ! ॥ ४ ॥
छिन्नायाः कालरुद्रस्तु शारदायाः शिवः शिवे ।
श्रीभैरवः कालरात्र्याः शिव इत्येवमीश्वरि ! ॥ ५ ॥
ज्वालामुख्या महादेवो वाग्देव्या विजयेश्वरः ।
ईश्वरो भुवनेश्वर्य्याः शिव इत्येवमीश्वरि ॥ ६ ॥
विश्वनाथस्तु पार्वत्या राज्या भूतेश्वरः शिवः ।
भीमायास्तु विरूपाक्षः शिव इत्येवमीश्वरि ! ॥ ७ ॥
नीलकण्ठस्तु दुर्गायाः शिलाया वामदेवकः ।
सद्योजातस्तु तारायाः शिव इत्येवमीश्वरि ! ॥ ८ ॥
अथ दुर्गा शिवस्यादौ वक्ष्ये मूलमनुम्परम् ।
यं जप्त्वा परमेशानि ! विद्या सिद्ध्यति सत्वरम् ॥ ९ ॥
श्रीनीलकण्ठमन्त्रस्य दक्षिणामूर्तिरीश्वरः ।

ऋषिश्छन्दो मयानुष्टुप् वर्णितो वीरवन्दिते ॥ १० ॥
दुर्गेश्वरो नीलकण्ठो देवता कथिता मया ।
हरितं बीजमीशानि तारं शक्तिः स्मृता शिवे ॥ ११ ॥
कालकं विश्वमाख्यातं नियोगे मनुसिद्धये ।
तारचन्द्रिकाडिम्भाद्यैः षड् दीर्घन्यासमाचरेत् ॥ १२ ॥
ध्यानमस्य शिवस्यास्य श्रुत्वा गोप्यतमं कुरु ।
बन्धूककाञ्चननिभं रुचिराहिमालं
पाशाङ्कुशौ वरमभीतिममुन्दधानम् ।
हस्तैः शशाङ्कसकलाभरणं त्रिनेत्रं,
श्रीनीलकण्ठमुमया श्रितमाश्रयामि ॥ १३ ॥
मन्त्रोद्धारं प्रवक्ष्यामि सर्वसिद्धिमयं परम् ।
दुर्गारहस्यभूतं च शृणु पार्वति ! सत्वरम् ॥ १४ ॥
प्रणवं हरितं व्योषं नीलकण्ठाय चास्मरी ।
दुर्गेशनीलकण्ठस्य मन्त्रोद्धारो दशाक्षरः ॥ १५ ॥
अनेन मन्त्रराजेन जपमात्रेण पार्वति ! ।
दुर्गायाः परमा विद्या कलौ सिद्ध्यति सत्वरम् ॥ १६ ॥
इतीदं गुह्यगुह्यातिगुह्यं सर्वस्वमीश्वरि ।
रहस्यं नीलकण्ठस्य गोपनीयं मुमुक्षुभिः ॥ १७ ॥

इति श्रीरुद्रयामले तन्त्रे देवीरहस्ये शिवविद्या समाप्ता ॥ ४ ॥

—:०:—

# अथ दीक्षाग्रहणविधिः

श्रीभैरव उवाच—

दीक्षाविधिं प्रवक्ष्यामि साधकानां हितेच्छया ।
विधाय विधिवद् दीक्षां पशुत्वात् स विमुच्यते ॥ १ ॥
दीयते परमा सिद्धिः क्षीयते कर्मवासना ।
आप्यते परमं धाम तेन दीक्षा स्मृता शिवे ! ॥ २ ॥
ब्रह्मादिकीटपर्यन्तं जगत्सर्वं महेश्वरि ! ।
पशुत्वं मोहितं देव्यास्तस्माद् दीक्षां चरेत् कलौ ॥ ३ ॥
श्रीदेव्याः सेवया देवि ! चक्रार्चनपुरःसरम् ।
साधकः पशुभावेन मुक्तो ज्ञानं भजेत् ततः ॥ ४ ॥
दीक्षितो याति चरणं दीक्षाहीनो भवेत् पशुः ।
दीक्षितस्तु भवेज्ज्ञानी पशुभावोज्झितो विभुः ॥ ५ ॥
सर्वपातकमुक्तो हि लभेत् स परमां गतिम् ।
यस्य दीक्षा शिवे ! नास्ति जीवनान्तं च जन्मिनः ॥ ६ ॥
स जातु नोत्तरेद्देवि ! निरयाम्बुनिधेः क्वचित् ।
दीक्षाहीनस्य देवेशि ! पशोः कुत्सितजन्मिनः ॥ ७ ॥
पापौघोऽन्तिकमायाति पुण्यं दूरं पलायते ।
तस्माद्यत्नेन दीक्षैषा ग्राह्या कृतिभिरुत्तमैः ॥ ८ ॥
बाल्ये वा यौवने वापि वार्धकेऽपि सुरेश्वरि ! ।
अन्यथा निरयी पापी पितॄन् स्वान्निरयं नयेत् ॥ ९ ॥
अन्ते पशुर्मनुष्यः सन् पशुयोनिं व्रजेच्छिवे ! ।
पूर्वपुण्यार्जितां प्राप्य वासनां परमार्थदाम् ॥ १० ॥

गुरुं कुलीनं तन्त्रज्ञं सर्वाङ्गैः सुमनोहरम् ।
लब्ध्वा भक्त्या प्रणाम्यादौ तोषयित्वा विशेषतः ॥ ११ ॥
प्रणामैर्वन्दनैर्देवि ! दक्षिणास्वरपूर्वकम् ।
सिद्धिसाध्यारिनिर्णीतां दीक्षां देवि ! यथाविधि ॥ १२ ॥
गृह्णीयात् परया भक्त्या साधको येन जायते ।
गुरुश्च शिष्यं रम्याङ्गं सर्वाङ्गैः सुमनोहरम् ॥ १३ ॥
गुरुभक्तिरतं बालं कुलीनं गर्भदीक्षितम् ।
देवीभक्तिरतं भक्तं पापभीतं कृतात्मकम् ॥ १४ ॥
दृष्ट्वा दीक्षां परां दद्यात् कृतभागी भवेत्ततः ॥ १५ ॥

श्रीदेव्युवाच—

भगवन् ! करुणाम्भोधे ! साधकानां हितेच्छया ।
कदा दीक्षा परा ग्राह्या साधकैस्तद् वदस्व मे ॥ १६ ॥

श्रीभैरव उवाच—

सुदिने शुभनक्षत्रे संक्रान्तावयनद्वये ।
नवरात्रदिने पित्रोः श्राद्धे स्वजनिवासरे ॥ १७ ॥
नववर्षदिने देवि ! चन्द्रसूर्योपरागके ।
शिवरात्र्यां स्वजन्मर्क्षे दीक्षां कुर्याद्विचक्षणः ॥ १८ ॥
तत्रादौ शुभनक्षत्रे स्नात्वा सम्पूज्य भैरवम् ।
गत्वा नदीतटं देवि ! तथा देवालयं क्वचित् ॥ १९ ॥
देवताग्रे गुरुं नत्वा नत्वा सन्तोषहेतवे ।
दीपं चोपवनं पुण्यं देवानामपि दुर्लभम् ॥ २० ॥
देवतायतनं वापि प्राप्य्वाशु प्रणमेत् ततः ।



तत्रादावासनं देवि ! संशोध्य गुरुमर्चयेत् ॥ २१ ॥
भूतान्निस्सार्य देवेशि ! सोऽङ्गन्यासं चरेत् ततः ।
प्राङ्मुखो गुरुरासीनश्चोत्तराभिमुखं शिशुम् ॥ २२ ॥
संस्थाप्य विधिवद् देवि ! देवीं स्मृत्वा निरामयः ।
देवताग्रे पराप्रीत्यै दीक्षां दद्याद् यथाविधि ॥ २३ ॥
कर्णमूले महाविद्यां श्रीविद्यां साधकेश्वरः ।
आनन्दसक्तहृदयः शनैस्त्रिस्त्रिः समर्पयेत् ॥ २४ ॥
गणेशस्य च गायत्र्यास्ततो मृत्युञ्जयस्य च ।
इष्टदेव्याः शिवस्यापि ततो विद्यां समर्पयेत् ॥ २५ ॥
शिष्यो दीक्षां तु सम्प्राप्य गुरुमभ्यर्च्य शक्तितः ।
तोषयित्वा प्रणामैश्च दक्षिणाभिः शुभाम्बरैः ॥ २६ ॥
तदाज्ञां सहसादाय पूजायै परमेश्वरि ! ।
यन्त्रं मन्त्रं च मालां च पञ्चाङ्गं परमेश्वरि ! ॥ २७ ॥
पुनर्जातु शिवे ! शिष्यो गुरवेऽपि न दर्शयेत् ।
इति दीक्षाविधेः सारभूतं गुह्यं रहस्यकम् ॥ २८ ॥
गुप्तातिगुप्तगुह्यं तु न प्रकाश्यं मुमुक्षुभिः ॥ २९ ॥

इति श्रीरुद्रयामले तन्त्रे देवीरहस्ये दीक्षाविधिः समाप्तः ॥ ४ ॥

—: ० :—

## अथ पुरश्चरणविधिः

श्रीभैरव उवाच—

अधुना मन्त्रराजस्य पुरश्चरणमुत्तमम् ।
वक्ष्ये सिद्धिप्रदो येन मन्त्रः कल्पद्रुमो भवेत् ॥ १ ॥

एकदा सुदिने देवि ! सुनक्षत्रे सुपर्वणि ।
पुरश्चरणकर्मादावारभेत् साधकोत्तमः ॥ २ ॥
वर्णलक्षं जपेन्मन्त्रं तदर्धं वा महेश्वरि ! ।
एकलक्षावधिं कुर्यान्नातो न्यूनं कदाचन ॥ ३ ॥

**देव्युवाच—**

लक्षजप्तो मनुर्देव ! यदि कल्पद्रुमो भवेत् ।
तदा किं साधको लोके लभेत् तत्त्वं वदस्व मे ॥ ४ ॥
कस्य हस्तेन मन्त्रस्य पुरश्चरणकक्रियाम् ।
कारयेत् साधकश्चैतत् संशयं छिन्धि धर्जटे ! ॥ ५ ॥

**श्रीभैरव उवाच—**

साधु पृष्टं त्वया देवि ! शृणु वक्ष्यामि पार्वति ! ।
न कदाचित् स्वयं कुर्यादादौ मन्त्रपुरस्क्रियाम् ॥ ६ ॥
गुरुहस्तेन देवेशि ! साधकस्य करेण वा ।
कुर्यान्मन्त्रवरस्यास्य पुरश्चरणकक्रियाम् ॥ ७ ॥
जीवहेतोर्यथा देही सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनोऽपि न मन्त्रः फलदायकः ॥ ८ ॥
जपाद् दशांशतो होमस्तद्दशांशेन तर्पणम् ।
मार्जनं तद्दशांशेन तद्दशांशेन भोजनम् ॥ ९ ॥
मन्त्रस्यादौ प्रसादश्चेत्स्वयं कुर्यात् पुरस्क्रियाम् ।
तदा जप्यं भवेद् भक्ष्यं क्षेत्रेष्वेव घृतं यथा ॥ १० ॥
तस्माच्च गुरुहस्तेन साधकस्य करेण वा ।
पुरश्चर्यां स्वमन्त्रस्य कारयेत् साधकोत्तमः ॥ ११ ॥



पुरश्चरणसङ्कल्पं दत्त्वादौ गुरवे जपे ।
जपं यथाविधि कुर्याद् गुरुः कुलमनोः प्रिये ! ॥ १२ ॥
गुरोः पादप्रसादेन पुरश्चर्याफलं शिवे ! ।
गृह्णीयात् साधको देवि ? गुरुं सन्तोषयेत् ततः ॥ १३ ॥
येन मन्त्रः कलौ शीघ्रमिष्टसिद्धिप्रदो भवेत् ।
दक्षिणाभिः शुभैर्वस्त्रैर्यथाविभवमात्मनः ॥ १४ ॥
ततः स्वयं पुरश्चर्याद् बहिः कुर्यात् तु साधकः ।
पर्वताग्रे नदीतीरे देवतायतने तथा ॥ १५ ॥
एकान्ते च शुचौ देशे जपेन्नियममात्मनः ।
ब्रह्मचर्यधरो वीरो मिताहारो जितेन्द्रियः ॥ १६ ॥
अनृतं मत्सरं दम्भं त्यजेत् प्रतिग्रहं तथा ।
पुरश्चरणकाले तु तद्धोमावसरेऽथवा ॥ १७ ॥
मूलं जप्त्वैकलक्षं तु कृत्वा होमं दशांशतः ।
साधकैः क्षत्रियेणापि दशांशं होममाचरेत् ॥ १८ ॥
तर्पयेत् सहितो देवीं भोजयेत् साधकांस्तथा ।
पुरश्चर्याविधिश्चैव वर्णितः कुलसुन्दरि ! ॥ १९ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमिष्यते ।
अष्टम्यां वा चतुर्दश्यां पक्षयोरुभयोरपि ॥ २० ॥
सूर्योदयात्समारभ्य यावत् सूर्योदयो भवेत् ।
तावज्जप्त्वा निरातङ्को मन्त्रः कल्पद्रुमो भवेत् ॥ २१ ॥
सूर्यचन्द्रग्रहे वापि ग्रासावधि विमुक्तितः ।
यावत्संख्यो मनुर्जप्तस्तावद्धोमादिकं चरेत् ॥ २२ ॥

सर्वसिद्धीश्वरो मन्त्रो भवेत् साधकवन्दिते ।
शरत्काले रवौ देवि ? जपेन्मन्त्रं यथाविधि ॥ २३ ॥
निशीथे रचयेद्धोमं हस्तत् पश्वाङ्गतं शिवे ! ।
तत् चरणात् साधको वापि क्षत्रियोऽपि शुभं लभेत् ॥ २४ ॥
अथवाऽन्यप्रकारेण* पुरश्चरणमिष्यते ।
सहस्रारगुरोः पादपद्मं ध्यात्वा प्रपूज्य च ॥ २५ ॥
केवलं देवभावेन सर्वसिद्धीश्वरो भवेत् ।
गुरवे दक्षिणां दद्याद् यथाविभवमात्मनः ॥ २६ ॥
गुरोरनुज्ञामात्रेण दुष्टमन्त्रोऽपि सिद्धयति ।
इत्येष पटलो गुह्यो मन्त्रसारमयो ध्रुवः ॥ २७ ॥
अप्रकाश्योऽपि दातव्यो नाख्येयो ब्रह्मवादिभिः ॥ २८ ॥
इति श्रीरुद्रयामले तन्त्रे देवीरहस्ये पुरश्चर्याविधिः सम्पूर्णः ॥ ५ ॥

## अथ पञ्चरत्नेश्वरीविधानम्

श्रीभैरव उवाच—

अधुना देवि वक्ष्येऽहं पञ्चरत्नेश्वरीविधिम् ।
येन श्रवणमात्रेण विद्या सिद्धयति सत्वरम् ॥ १ ॥
विना पञ्चरत्नेश्वरी मन्त्रजाप्यं, न सिद्धिर्भवेत् साधकस्योत्तमस्य ॥
ततः पूजयेद्दीक्षितः श्री गुरुं स्वं, समस्तात् सिद्धीश्वरं देवदेवि ?॥२॥
दुर्गायाः परमं तत्त्वं पञ्चरत्नेश्वरीमयम् ।
शृणुष्वावहितो भूत्वा येन मुक्तिर्भवेत् कलौ ॥ ३ ॥

* गुरुमानीय संस्थाप्य देवतापूजनं चरत् । वस्त्रालंकारहेमाद्यैः सन्तोष्य गुरुमेव च ॥ तत्सुतं तत्सुताञ्चैव तस्य पत्नीं तथैव च । पूजयित्वा मनुञ्जप्त्वा सर्वसिद्धीश्वरो-भवेत् । अथवाऽन्यप्रकारेण पुरश्चरणमिष्यते ॥



श्रीदुर्गा शारदा शारी सुमुखी वगलामुखी ।
पञ्चरत्नेश्वरी विद्या दुर्गायाः कथिता मया ॥ ४ ॥
सुदिने देवि ! दुर्गायाः पञ्चरत्नेश्वरीं जपेत् ।
वर्णालक्षपुरश्चर्याफलमाप्नोति साधकः ॥ ५ ॥
साधकेषु चतुर्ष्वेवं श्रीदुर्गोपासकः शिवे ! ।
श्रीगुरुं बन्दनस्तुत्या तोषयित्वा धनैरपि ॥ ६ ॥
दीक्षामन्येषु शिष्येषु दापयेत् साधकोत्तमः ।
येन मन्त्रो हि दुर्गायाः सद्या स्फुरति भारती ॥ ७ ॥
पञ्चस्वपि महादेवि ! साधकेषु कलौ युगे ।
पञ्चरत्नेश्वरीं दत्त्वा पुरश्चर्याफलं लभेत् ॥ ८ ॥
श्रीदुर्गोपासकश्चैव शारदोपासकः परः ।
शारिकोपासकस्त्वन्यो मातङ्ग्यास्तु परः शिवे ! ॥ ९ ॥
पञ्चमो वगलामुख्याश्चैकत्र मिलिताश्च ते ।
पूजयेर्युगुरुं देवि ! पञ्चरत्नेश्वरीं जपेत् ॥ १० ॥
अन्योन्यं साधकाः पञ्च श्रीगुरोः पुरतः शिवे ।
पुरश्चर्याफले सिद्धिं प्रार्थयेयुर्गुरोस्ततः ॥ ११ ॥
एवं सिद्धौ मनुर्लोके सर्वसिद्धिं प्रयच्छति ।
तारं मायां चक्रिकं चक्रिदुर्गा, वायव्यार्णं विश्वमन्ते भवानि ! ।
दुर्गायास्ते मन्त्रितो मूलविद्या, मन्त्रोद्धारो गोपितोऽष्टाक्षरोऽयम् ।
ॐ ह्रीं दुं दुर्गायै नमः ।
तारं मायां कामराजं च शक्तिः स्तम्भं तस्माद् भगवत्यै च नाम ।
भूतिस्तस्माद्ज्वले ठद्वयं स्यात्प्राक्तो भुक्त्यै शारदामन्त्र एषः ।

ॐ ह्रीं क्लीं सः नमो भगवत्ये शारदायै हूं स्वाहा

तारं परा मातटसिन्धुराणाः, स्वं शर्मतन्मध्यगतश्चनाम

भूतिस्तस्मादिति शारिकायास्त्रयोदशार्णो मनुरस्ति गोप्यः

ॐ ह्रीं श्रीं हूं फ्रंयी शारिकायै नमः

वाक्कामुच्छिष्टपदं विभाव्य, चाण्डालिनी वै सुमुखी च देवी

महापिशाची सकलात्रयाब्जं वनं मनुः स्यात् सुमुखीप्रियोऽयम्

ॐ ऐं क्लीं उच्छिष्टचाण्डालिनी सुमुखी महापिशाचिनि ह्रीं

ठः ठः ठः स्वाहा ।

तारं मठं वगलामुखि सर्वदुष्टानां वाचं मुखं स्तम्भयद्विः

पदं जिह्वां कीलयद्विर्मठं वा तारं नीरं ब्रह्मणोस्त्राय विद्या

ॐ ह्रीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय

स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्रीं ॐ

इत्येषा गुप्तविद्येयं प्रभावसहिता कलौ ।

पञ्चरत्नेश्वरी ग्राह्या पुरश्चरणसिद्धये ॥ १२ ॥

इतीदं तत्त्वमीशानि पुरश्चर्यारहस्यकम् ।

अनन्तफलदं गुह्यं गोपनीयं मुमुक्षया ॥ १३ ॥

इति श्रीरुद्रयामले तन्त्रे देवीरहस्ये पञ्चरत्नेश्वरीविधानं समाप्तम् ॥ ६ ॥

## अथ होमविधिः

ॐ अथ होमविधिं वक्ष्ये सर्वतन्त्रेषु गोपितम् ।

दुर्गारहस्यकं सारं मन्त्रराजस्य पार्वति ! ॥ १ ॥

ध्यात्वा देवीं परां दुर्गां गुरुं ध्यात्वा सशक्तिकम् ।

जपेच्छ्रीचक्रपुरतो निशीथे मन्त्रमीश्वरि ॥ २ ॥



अयुतं लक्षमेकं वा दशांशं होममाचरेत् ।

कोटिलक्षप्रजप्तस्य मन्त्रस्य सुरसुन्दरि ! ॥ ३ ॥

विना दशांशहोमेन न तत्फलमवाप्नुयात् ।

विना श्मशानगमनं नित्यहोमजपादयः ॥ ४ ॥

न सिद्ध्यन्ति वरारोहे ! कलौ भैरवशापतः ।

घृतपायसमृद्वीकागुडपुष्पशतावरैः ॥ ५ ॥

होमो दशांशतः कार्यो जपस्य सुरवन्दिते ! ।

पञ्चामृतेन देवेशि तद्दशांशेन मार्जयेत् ॥ ६ ॥

तर्पयित्वा दशांशेन पञ्चामृतसुखं सुधीः ।

भोजयित्वा दशांशेन दीक्षितांश्च द्विजोत्तमान् ॥ ७ ॥

ततो देवि ! पुरश्चर्याफलमाप्नोति साधकः ।

अन्यथा सिद्धिहानिः स्याज्जप्तस्यापि मनोः सदा ॥ ८ ॥

श्री देव्युवाच—

यस्य नैतावती शक्तिर्होमं कर्तुं दशांशतः ।

स कथं कुरुतां होमं तद् वदस्व महेश्वर ॥ ९ ॥

भैरव उवाच—

यस्य होमं शिवे कर्तुं शक्तिर्नास्ति दशांशतः ।

तस्य युक्तिं ब्रवीम्यद्य कौलिकानां हिताय च ॥ १० ॥

शुभेऽह्नि सायं देवेशि ! गत्वोपवनमण्डलम् ।

श्मशानं संमुखं धृत्वा पृष्ठे वा परमेश्वरि ॥ ११ ॥

श्मशानं प्रणमेद् भक्त्या साधकः साधकैः समम् ।

ज्वालाकरालवदने ! कल्पान्तदहनप्रिये ! ॥ १२ ॥

प्राणिप्राणालयोद्भूते ! चित्ते मेऽनुग्रहं कुरु ।

इति नत्वा महादेवि ! ज्ञात्वादिभूतभैरवान् ॥ १३ ॥
निवसेत्तत्र रात्रौ तु कुर्याद्धोमं कुलेश्वरि ! ।
ऐशान्यां दिशि देवेशि ! श्रीचक्रं तु विभावयेत् ॥ १४ ॥
सम्पूज्य विधिवन्मंत्रैर्दिक्पालास्तत्र पार्वति ! ।
गणेशं पूजयेत्तत्र पूजयेत् कुलयोगिनीः ॥ १५ ॥
तत्पूर्वतः खनेत् कुण्डं हुनेदाज्यं च विद्यया ।
त्रिकोणं कुण्डमीशानि ! हस्तार्धागाधमद्रिजे ! ॥ १६ ॥
हस्तैकविस्तृतं विष्वक् तस्मिश्चक्रे विभावयेत् ।
बिन्दुत्रिकोणषट्कोणं वसुपत्रं त्रिवर्तुलम् ॥ १७ ॥
भूगृहाङ्कं मया ख्यातं वह्नि चक्रं कुलार्चिते ।
गणेशधर्म्मवरुणाः कुबेरसहितास्ततः ॥ १८ ॥
पूजनीया विशेषेण गन्धाक्षतप्रसूनकैः ।
ब्रह्माद्या मातरः पूज्या असिताद्याश्च भैरवाः ॥ १९ ॥
वसुपत्रेषु सम्पूज्या वह्निचक्रे महेश्वरि ! ।
माता च मोहिनी चैव तृतीया च मनोन्मनाः ॥ २० ॥
मुक्तकेशी च मातङ्गी मदिराक्षी षडस्रके ।
त्रिकोणे यमुना गङ्गा सम्पूज्या च सरस्वती ॥ २१ ॥
बिन्दौ च दुर्गा सम्पूज्या गन्धपुष्पाक्षतैः शिवे ! ।
बिन्दौ वरणावच्चैव मूलमन्त्रेण मान्त्रिकः ॥ २२ ॥
वह्निमावाह्य मूलेन तदावाहनमुद्रया ।
ॐ रं रा अग्नये स्वाहा मन्त्रेणेति सुरेश्वरि ! ॥ २३ ॥
वह्नि मूलेन संस्कृत्य कृत्वाज्यं घृतमीश्वरि ! ।



दशांशं होमसङ्कल्पं कुर्यान्मूलस्य साधकः ॥ २४ ॥
मालया दहने दद्यादाहुतीनां शतत्रयम् ।
आहुतोः क्षत्रियन्यस्तास्तत्र वह्नौ हुनेत् प्रिये ! ॥ २५ ॥
पुष्पैः फलैराज्यमिश्रैस्ततो दद्याद् बलिं प्रिये !
ॐ मकारैः पञ्चभिर्देवि पुनर्जप्त्वा च पूर्ववत् ॥ २६ ॥
आहुतीनां शतं दद्यादष्टोत्तरमधोमुखः ।
ततः साधकचक्रस्य क्षत्रियस्य च पार्वति ॥ २७ ॥
पूजां विधाय चक्रेऽस्मिंस्तोषयेन्नुतिभिर्गुरुम् ।
आशीर्भिर्वर्द्धयेत् क्षत्रं येनाशु क्षोणिपो भवेत् ॥ २८ ॥
क्षत्रियोऽपि वदेत् तत्र पुरश्चर्याफलं मनोः ।
लभस्व साधकश्रेष्ठ ततः पूर्णाहुतिं हुनेत् ॥ २९ ॥
ततो देवीं च सशिवां मन्त्री संहारमुद्रया ।
साधकांस्तर्पयित्वादौ भक्ष्यपानादिभिः शिवे ॥ ३० ॥
विसृज्य साधकान् देवीं सशिवां सपरिच्छदाम् ।
पुरश्चर्याफलं प्राप्य साधको मुक्तिभाग् भवेत् ॥ ३१ ॥
इत्येष पटलो दिव्यो मन्त्रपूजामयो ध्रुवः ।
सर्वतस्त्वैकनिलयो गोपनीयो मुमुक्षुभिः ॥ ३२ ॥

इति श्रीरुद्रयामले तन्त्रे देवीरहस्ये होमविधिः समाप्तः ॥ ७ ॥

## अथ चक्रपूजाविधिः

अधुना चक्रपूजान्ते वक्ष्यामि नगनन्दिनि ! ।
येन दुर्गा कलौ शीघ्रं वरदा भविता प्रिये ! ॥ १ ॥
एकादशौधिका देवि ! साधकाः परमार्थदाः ।

एकादशापि चक्रे तु वर्णिताः साधकाः शिवा ॥ २ ॥
उत्तमा नव देवेशि ! न पूज्याश्चक्रमध्यगाः ।
विना चक्रार्चनं चैव नित्यपूजाजपादयः ॥ ३ ॥
फलदा योगिनीशापात् तस्माच्चक्रं प्रपूजयेत् ।
कुहूपूर्णेन्दुसंक्रान्तिचतुर्दश्यष्टमीषु च ॥ ४ ॥
नवम्यां मङ्गले मन्दे चक्रपूजा शुभप्रदा ।
साधकश्च सतीर्थ्याश्च मिलिताः शिवमन्दिरे ॥ ५ ॥
देवतायतने वापि शून्ये शृङ्गाटकेऽथवा ।
दिग्भूतभैरवान् देवि ! विचार्य पुरसाधकः ॥ ६ ॥
उपविश्यासनं देवि ! संशोध्य वीरमण्डले ।
साधकानुपवेश्यात्र कुर्य्यात् साधक आदरात् ॥ ७ ॥
न्यासं विधाय सर्वाङ्गे भूतशुद्ध्यादिकं चरेत् ।
तत्र प्राणान् प्रतिष्ठाप्य श्रीचक्रं पूजयेच्छिवे ॥ ८ ॥
आत्मश्रीचक्रयोर्मध्ये कुम्भस्थापनमाचरेत् ।
गौडी माध्वी तथा पैष्टी वासवं पूजयेच्छिवे ॥ ९ ॥
एतेषां रसमादाय तत्त्वतो भैरवार्चने ।
आनन्दरसपूजायां तुष्यते परमेश्वरी ॥ १० ॥
विप्राश्च क्षत्रिया वैश्याः शूद्राः पूज्याश्च पार्वती !
गौडी विप्रेषु शुभदा माध्वी क्षत्रेषु चोत्तमा ॥ ११ ॥
वैश्येषु शुभदा पैष्टी शूद्रेषु शिवमासवम् ।
ब्रह्मक्षत्रियवैश्यानामानन्दस्तु शुभावहः ॥ १२ ॥
आसवं दूरतस्त्याज्यं साधकैस्तु मुमुक्षुभिः ।



अभावे तु सुरानन्दरसानां परमेश्वरि ! ॥ १३ ॥
मधुना पूजयेद् देवि देवमानन्दभैरवम् ।
द्रव्यं संशोध्य देवेशि ! मकारान् पञ्च शोधयेत् ॥ १४ ॥
श्रीचक्राऽग्रेर्चयेत् तत्र साधकान् भैरवागमे !
तत्र सम्पूज्य यन्त्रेशं देवमावाह्य भैरवम् ॥ १५ ॥
योगिनीः पूजयेत् तत्र बटुकं पूजयेत् ततः ।
गणेशक्षेत्रपालांश्च पूजयेच्चक्रनायकान् ॥ १६ ॥
सन्तर्प्य देवान् पितरंश्च मुनीन् वेदान् महेश्वरि ।
मन्त्रनामसहस्रं च स्तोत्रं पुण्यं पठेत् ततः ॥ १७ ॥
श्रीचक्राग्रे जपेन्मूलं पठेत् कवचमीश्वरि ! ।
ततो देव्यै बलिं दत्त्वा साधकांस्तर्पयेच्छिवे ! ॥ १८ ॥
भैरवांस्तर्पयेच्चाष्टौ दीक्षितांस्तर्पयेत् ततः ।
उत्तमं नव पात्राणि पञ्च पात्राणि मध्यमम् ॥ १९ ॥
अधमस्त्रीणि पात्राणि चैकपात्रं न पूजयेत् ।
प्रवृत्ते भैरवीतन्त्रे सर्वे वर्णा द्विजातयः ॥ २० ॥
निवृत्ते भैरवीतन्त्रे सर्वे वर्णाः पृथक् पृथक् ।
नव कन्याः समभ्यर्च्य वीरेशौ भैरवार्चने ॥ २१ ॥
रेतसा तर्पयेद् देवीं कुलकोटिं समुद्धरेत् ।
शक्त्युच्छिष्टं पिबेद् द्रव्यं वीरोच्छिष्टं च चर्वणम् ॥ २२ ॥
मकारं पञ्चसंयुक्तं कुर्याच्छ्रीचक्रमण्डलम् ।
स्वगुरुं पूजयेत् तत्र तर्पयेच्छक्तितः परम् ॥ २३ ॥
तोषयित्वा गुरुं देवि ! दक्षिणाभिश्च चन्दनैः ।

तदाज्ञां शिरसादाय कुर्यादानन्दमात्मनः ॥ २४ ॥
वामे रामा रमणकुशला दक्षिणे चालिपात्र-
मग्रे मुद्राचणकवटुकौ सूकरस्योष्णशुद्धिः !
तन्त्री वीणा सरसमधुरा सद्गुरुः सत्कथायाम्;
वामाचारः परमगहनो योगिनामप्यगम्यः ॥ २५ ॥
इतीदं चक्रसर्वस्वं गुह्यं तत्त्वात्मकं परम् ।
तव भक्त्या मया ख्यातं गोपनीयं मुमुक्षुभिः । २६ ॥
इति श्रीरुद्रयामले तन्त्रे देवीरहस्ये चक्रपूजाविधिः समाप्तः ॥ ८ ॥

—: ० :—

## अथ आचारवर्णनम्

श्री भैरव उवाच—
ॐ अधुना देवि वक्ष्यामि दुर्गायास्तत्त्वमुत्तमम् ।
आचाराणां विधिं येन कलौ दुर्गा प्रसीदति ॥ १ ॥
द्वौ मार्गौ चागमे स्यातां वामाचारास्तु दक्षिणः ।
तयोस्तत्त्वं कुलाचारः शृणु तेषां विधिं शिवे ! ॥ २ ॥
साधको दीक्षितो भूत्वा केन सिद्धिमवाप्नुयात् ।
तद् वदामि तव स्नेहान्न चाख्येयं दुरात्मने ॥ ३ ॥
त्रीणि बीजानि दुर्गायास्तदाचारास्त्रयः स्मृताः ।
प्रथमो दक्षिणाचारो वामाचारो द्वितीयकः ॥ ४ ॥
तृतीयस्तु कुलाचारो विधिं तेषां शृणु प्रिये ! ।
प्रभाते स्मानसन्ध्यादि मध्याह्ने जपमीश्वरि ! । ५ ॥
पौर्णमासनसात्मीयं भक्ष्यं पायसशर्कराः ।
माला रुद्राक्षसम्भूता पात्रं पाषाणसम्भवम् ॥ ६ ॥



भोगः स्वकीयकान्ताभिर्दक्षिणाचार इत्ययम् ।
द्रव्येण मधुना देवि सिद्धिहानिकरो मतः ॥ ७ ॥
वामाचारं प्रवक्ष्यामि श्रीदुर्गासाधनं परम् ।
यं विधाय कलौ शीघ्रं मन्त्रिकः सिद्धिभाग् भवेत् ॥ ८ ॥
माला नृदन्तसम्भूता पात्रं पाषाणमुण्डकम् ।
आसनं सिंहचर्मादि कंकणं स्त्रीकचोद्भवम् ॥ ९ ॥
द्रव्यमासवतत्त्वाढ्यं भक्ष्यं मांसादिकं शिवे ! ।
चर्वणं पलमत्स्यादिमुद्रा वीणारवः कथा ॥ १० ॥
मैथुनं वरकान्ताभिः सर्ववर्णसमानतः ।
वामाचार इति प्रोक्तः सर्वसिद्धिप्रदः शिवे ! ॥ ११ ॥
अन्यथा सिद्धिहानिः स्यान्मन्त्रस्यास्य महेश्वरि ! ।
तस्माद् वामं भजेन्नित्यं वाम एव पराजितः ॥ १२ ॥
दक्षिणं च कुलं चैव वीरैस्साधकसत्तमैः ।
त्याज्यं दूरात् कलौ देवि वाममेव जपेत् कलौ ॥ १३ ॥
कुलाचारं प्रवक्ष्यामि सेव्यं योगिभिरुत्तमैः ।
कुलस्त्रियं कुलगुरुं कुलदेवीं महेश्वरि ! ॥ १४ ॥
नित्यं प्रपूजयेद् विश्वं स कुलाचार उच्यते ।
कुलस्त्रियं शिवे ! ज्ञात्वा नुत्वा नुत्वा महेश्वरि ! ॥ १५ ॥
हठदानीय सम्पूज्य तया भोगं विधाय च ।
रेतसा तर्पयेद् देवीं श्रीदुर्गां चक्रनायिकाम् ॥ १६ ॥
नीलकण्ठं च विधिना जपं कुर्याद्विशेषतः ।
तत्पूर्वकं चरेद्धोमं कुलकान्तां विभूषयेत् ॥ १७ ॥

पानैः पेयैस्तथा भक्ष्यैः सन्तर्प्य कुलयोषितम् ।
प्रत्यहं वै चरेद् देवं कुलाचार इति स्मृतः ॥ १८ ॥
इत्याचारपरः श्रीमान् कुलस्त्रीगुरुपूजकः ।
वामाचारपरो मन्त्री मुक्तिभाग् भविता ध्रुवम् ॥ १९ ॥
इत्येष पटलो गुह्यो देव्याश्चाचारवल्लभः ।
रक्षितव्योऽपि भक्तेभ्यो न प्रकाश्यो मुमुक्षुभिः ॥ २० ॥

इति श्रीरुद्रयामले तन्त्रे देवीरहस्ये आचारवर्णनम् ॥ ९ ॥

## अथ दशमीपूजनम्

श्रीभैरव उवाच—

अधुना कथयिष्यामि श्रीदुर्गाया रहस्यकम् ।
तत्त्वं मन्त्रस्य देवेशि ! दशमीपूजनं परम् ॥ १ ॥
दीक्षागुरुः शिवे ! यस्तु दशमी स प्रकीर्तितः ।
पूजनं तस्य वक्ष्यामि सर्वतन्त्रेषु गोपितम् ॥ २ ॥
दीक्षां गृहीत्वा विधिवद् गुरोः कुलविचक्षणात् ।
तदाज्ञां शिरसादाय साधयेत् स्वमनुं ततः ॥ ३ ॥
एकदा पुण्यदिवसे मुहूर्ते शुभदे तथा ।
गुरुमानीय देवेशि ! शून्यगेहे चतुष्पथे ॥ ४ ॥
श्मशाने वा वने वापि स्वगृहे वापि पार्वति ! ।
तत्र भूमौ लिखेद् यन्त्रं यथावत् वर्ण्यते मया ॥ ५ ॥
विन्दुत्रिकोणं वसुकोणविम्बं वृत्ताष्टपत्रं शिखिवृत्तयुक्तम् ।
धरागृहं वह्नितुरीभिराढ्यं, यन्त्रं गुरोर्देवि ! मया प्रदिष्टम् ।६।



सिन्दूरेण विलिख्याशु पूजयेच्चक्रमीश्वरि ! ।
गणेशधर्मवरुणाः कुबेरसहिताः शिवे ! ॥ ७ ॥
पूज्या द्वास्थाः सुपुष्पैश्च गन्धाक्षतपुरःसरैः ।
असिताङ्गो रुरुश्चण्डः क्रोधेशोन्मत्तभैरवौ ॥ ८ ॥
कपालो भीषणो देवि ! संहारो वाऽष्टपत्रके :
परमानन्दनाथं च प्रकाशानन्दनाथकम् ॥ ९ ॥
श्रीभोगानन्दनाथं च समयानन्दनाथकम् ।
भुवनानन्दनाथं च समयानन्दनाथकम् ॥ १० ॥
भुवनानन्दनाथं च श्रीस्वात्मानन्दनाथकम् ।
अष्टकुलगुरुं देवि ! पूजयेद् वसुपत्रके ॥ ११ ॥
मदनानन्दनाथं च श्रीलीलानन्दनाथकम् ।
महेश्वरानन्दनाथं पूजयेद् वै त्रिकोणके ॥ १२ ॥
बिन्दुं गुरुं च सम्पूज्य गन्धाक्षतप्रसूनकैः ।
तत्र विन्दौ गुरुं देवि स्थापयेद् भक्तिपूर्वकम् ॥ १३ ॥
सम्पूजयेत् स्वमूलेन दक्षिणां कालिकां यजेत् ।
महाकालं यजेत् तत्र कामं कामेश्वरीं तथा ॥ १४ ॥
गुरुं च परमं देवि ! परापरगुरुं ततः ।
परमेष्ठिगुरुं चैव स्वगुरोर्मूर्ध्नि पूजयेत् ॥ १५ ॥
सम्पूज्य विवधैः पुष्पैर्माल्यैराभरणोत्तमैः ।
दक्षिणाभिर्महेशानि ! भक्ष्यैर्भोज्यैश्च लेह्यकैः ॥ १६ ॥
पुष्पैः पेयैश्च खाद्यैश्च बलिं दत्त्वा च तर्पयेत् ।
आनन्दरससम्पूर्णां गुरुवध्वा महेश्वरि ! ॥ १७ ॥
तत्र देवि गुरुं नत्वा प्रार्थयेत् स्वमनोरथम् ।
य एवं पूजयेद् देवि स्वगुरुं पुण्यवासरे ॥ १८ ॥

स एव भैरवः साक्षाद् विचरेद् भुवनत्रये ।
गुरुरेव परो मन्त्रो गुरुरेव परो जपः ॥ १९ ॥
गुरुरेव परा विद्या नास्ति किञ्चिद् गुरुं विना ।
यस्य तुष्टो गुरुर्देवि तस्य तुष्टा महेश्वरी ॥ २० ॥
येन सन्तोषितो देवि ! गुरुः स हि सदाशिवः ।
यत्र दृष्ट्वापि न ब्रूयाद् गुरुस्तत्र समाचरेत् ॥ २१ ॥
पुण्यं वा पुण्यमीशानि ! त्याज्यं ग्राह्यं कुलोचिते ।
गुरुर्वदति यत् सद्यस्तत्कुर्यात् साधकोत्तमः ॥ २२ ॥
विना गुरूपदेशेन न सिद्ध्यति कलौ मनुः ।
तस्माद् गुरुं भजेद् भक्त्या तोषयेत् सततं गुरुम् ॥ २३ ॥
गुरोर्यत्र परीवादो निन्दा यत्र प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ नो वा दूरं पलायनम् ॥ २४ ॥
गुरुर्देवि ! परो धर्मो गुरुरेव परा गतिः ।
गुरुमभ्यर्चयेन्नित्यं देवी येन प्रसीदति ॥ २५ ॥
इतीदं दशमीतत्त्वं सर्वागमरहस्यकम् ।
सारात् सारततं देवि गोपनीयं मुमुक्षुभिः ॥ २६ ॥
इतीदं परमं तत्त्वं तत्त्वं सर्वस्वमुत्तमम् ।
दुर्गारहस्यसाराढ्यं गुह्यं गोप्यं च साधकः ॥ २७ ॥
इति देवीरहस्याख्यतन्त्रोऽयं तन्त्रसारगः ।
सर्वस्वं मे रहस्यं मे सर्वागमरहस्यकः ॥ २८ ॥
श्रीदुर्गायास्तत्त्वभूतो तन्त्रराजमयी ध्रुवः ।
सिद्धिप्रदो महादेवि ! पूजनीयोऽस्ति साधकैः ॥ २९ ॥

श्रीदेव्युवाच—

भगवन्भवता भक्त्या प्रसादोऽयं महान् कृतः ।



सत्कृत्वा वर्णितस्तन्त्रः श्रीदुर्गायाः कुलेश्वर ! ॥ ३० ॥
क्रीताऽस्मि तव दास्यस्मि भक्ताऽस्मि त्रिपुरान्तक !
सर्वथा रक्षणीयाऽस्मि किमन्यत् कथयामि ते ॥ ३१ ॥
इदं देवीरहस्याख्यं तन्त्रराज्ञो महेश्वरि ! ।
सर्वसिद्धिमयं गोप्यं गोपनीयं महेश्वरि ॥ ३२ ॥
अदातव्यमभक्तेभ्यो दुरात्मभ्यो महेश्वरि ! ।
स्वपुत्रेभ्योऽन्यशिष्येभ्यो न देयं तु मुमुक्षुभिः ॥ ३३ ॥
इदं हि सारं तन्त्राणां तत्त्वं सर्वस्वमुत्तमम् ।
रहस्यं देवि ! दुर्गाया गोपनीयं स्वयोनिवत् ॥ ३४ ॥

इति श्रीरुद्रयामले तन्त्रे देवीरहस्ये दशमीपूजनम् ॥ १० ॥

—: ० :—

## अथ दुर्गापदुद्धारस्तोत्रम्

नमस्ते शरण्ये शिवे सानुकम्पे, नमस्ते, जगद्व्यापिके विश्वरूपे ।
नमस्ते जगद्वन्द्यपादारविन्दे, नमस्ते जगत्तारिणी त्राहि दुर्गे ॥ १ ॥
नमस्ते जगच्चिन्त्यमानस्वरूपे, नमस्ते महायोगिनि ज्ञानरूपे ।
नमस्ते नमस्ते सदानन्दरूपे, नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ २ ॥
अनाथस्य दीनस्य तृष्णातुरस्य, भयार्तस्य भीतस्य बद्धस्य जन्तोः ।
त्वमेका गतिर्देवि ! निस्तारकर्त्री, नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ ३ ॥
अरण्ये रणे दारुणे शत्रुमध्येऽनले सागरे प्रान्तरे राजगेहे ।
त्वमेका गतिर्देवि ! निस्तारनौका, नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ ४ ॥
अपारे महादुस्तरेऽत्यन्तघोरे, विपत्सागरे मज्जतां देहभाजाम् ।
त्वमेका गतिर्देवि निस्तारहेतुर्नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ ५ ॥
नमश्चण्डिके चण्डदुर्दण्डलीला-समुत्खण्डिताखण्डिताशेपशत्रो ।
त्वमेका गतिर्देवि ! निस्तारबीजं, नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ ६ ॥
त्वमेवाघभावाधृतासत्यवादी, नजाताजिताक्रोधनात् क्रोधनिष्ठा ।
इडा पिङ्गला त्वं सुषुम्ना च नाडी, नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ ७ ॥

नमो देवि ! दुर्गे ! शिवे ! भीमनादे ! सरस्वत्यरुन्धत्यमोघस्वरूपे ! ।
विभूतिः शची कालरात्रिः सती त्वं, नमस्ते जगत्तारिणि त्राहि दुर्गे ॥८॥

शरणमसि सुराणां सिद्धविद्याधराणां,
मुनिमनुजपशूनां दस्युभिस्त्रासितानाम् ।
नृपतिगृहगतानां व्याधिभिः पीडितानां,
त्वमसि शरणमेका देवि ! दुर्गे ! प्रसीद ॥ ९ ॥

इदं स्तोत्रं मया प्रोक्तमापदुद्धारहेतुकम् ।
त्रिसन्ध्यमेकसन्ध्य वा पठनाद् घोरसंकटात् ।
मुच्यते नात्र सन्देहो भुवि स्वर्गे रसातले ।
सर्वं वा श्लोकमेकं वा यः पठेद् भक्तिमान सदा ॥१०॥

स सर्वं दुष्कृतं मुक्त्वा प्राप्नोति परमं पदम् ।
पठनादस्य देवेशि किं न सिद्धयति भूतले ॥
स्वराजो ह्यसौ देवि ! संक्षेपात्कथितो मया ॥ ११ ॥

इति श्रीसिद्धेश्वरीतन्त्रे उमामहेश्वरसंवादे दुर्गापदुद्धारस्तोत्रं पूर्णम् ।

—: ❀ :—

श्रीमद्गोपेन्द्रनन्दः सकलगुणयुता धर्मपत्नी यशोदा,
तस्यां गर्भे धरायां वसुदलकमले कर्णिकायां षडस्रे ।
प्रादुर्भूता त्रियोन्यामजशिवजननी विन्ध्यशैलेन्द्रविन्दौ,
सा देवी देवदेवी त्रिभुवन-जननी चण्डिका पातु युष्मान् ॥१॥

## सङ्ग्रहकर्तृ वंशवर्णनम्—

श्रीसाङ्कृत्यकुले मनीषिमुकुटो विश्वेश्वरोऽभूत्तत,
श्रीकालीचरणोऽङ्गदर्शनबुधः सद्धर्मविज्ञस्ततः ।
श्रीमच्छत्रधराद् धरैकगणकान्मातृप्रसादोऽस्ति स,
चन्द्राङ्गेभधराशके व्यरचयच्छ्रीचण्डिकाप्रीयते ॥ २ ॥
समाप्तिमिदं साङ्गोपाङ्गं दुर्गापञ्चाङ्गम् ।

—: ❀ :—